# संस्कृतवर्णानां स्वरूपं समुत्पत्तिश्च

यादवपुरविश्वविद्यालयानुमोदितः
पी० एच्० डी० शोधसन्दर्भः

प्रणेता

डॉक्टर लङ्केश्वर शतपथी शर्मा
एम्० ए०, पी० एच्० डी०
साहित्याचार्यः, व्याकरणशास्त्री, हिन्दीसाहित्यविशारदः
पुरीसामन्तचन्द्रशेखरमहाविद्यालये प्रवाचकः संस्कृतविभागमुख्यश्च
भूतपूर्वः विद्याभूषणसंस्कृतमहाविद्यालये प्राचार्यः
उत्कलसंस्कृतशिक्षाया अधीक्षकः
उत्कलसंस्कृतसमितेः उत्कलसंस्कृतोपदेष्टृसमितेश्च संपादकः
निखिलोत्कलसंस्कृतमहामण्डलस्य सभापतिः

# SAṂSKṚTAVARṆĀNĀṂ SVARŪPAṂ SAMUTPATTIŚCA

प्रकाशिका

श्रीमती विष्णुप्रिया शतपथी

घोडावजार, पुरी (ओडिशा)

पिन – ७५२००२

(निखिलोत्कलसंस्कृतमहामण्डलानुकूल्येन)

प्रथममुद्रणम्—१९८०

मुद्रणालयः

आलोकप्रभा प्रिण्टर्स्

खट्विन साहि, कटक, (ओडिशा)

पिन —७५३००८



(व्याकरण-ध्वनिविज्ञान-वेदच्छात्राणां परमोपयोगी)

मूल्यम्—पञ्चचत्वारिंशत् रूप्यकाणि

Price—Rs. 45.00

# वर्णप्रशस्तिः

ॐ चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्याँ आविवेश ॥

—ऋक्-संहिता (मण्डल ४/५८/३)

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

वाक्यपदीयम् (१/१)

नित्यानन्दवपुर्निरन्तरगलत्पञ्चाशदर्णैः क्रमा—
द्व्याप्तं येन चराचरात्मकमिदं शब्दार्थरूपं जगत् ।
शब्दब्रह्म यदूचिरे सुकृतिनश्चैतन्यमन्तर्गतं
तद्वोऽव्यादनिशं शशाङ्कसदनं वाचामधीशं महः ॥

—शारदातिलकम् (१/१)

या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टि
वर्णानन्तः प्रकटकरणैः प्राणसङ्गात् प्रसूते ।
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥

—श्रीधरी टीका (श्रीमद्भागवतस्य ११/१२/१७स्य)

# विषय-सूची

## द्वितीयः परिच्छेदः—वर्णोद्गमप्रकारः



## तृतीयः परिच्छेदः—बाह्यप्रयत्नाः



## चतुर्थः परिच्छेदः—आभ्यन्तर प्रयत्नाः

## पञ्चमः परिच्छेदः—केचिद्वर्णविशेषाः



## परिशिष्टम्

# कोष्ठकसूची



# चित्रसूची



# रेखाचित्रसूची

# श्लोक-श्लोकांश-सूची

## शब्दसंक्षेपाः

| | | |
|---|---|---|
| आ.—आह्निकम् | द्र.—द्रष्टव्यम् | श्लो.—श्लोकः |
| इ.—इङ्ग्लिश् | पृ.—पृष्ठम् | सं.—संस्कृतम् |
| ओ.—ओडिया | म. प्रा.—महाराष्ट्रीप्राकृतम् | हि.—हिन्दी |
| चि.—चित्रम् | मा. सू.—माहेश्वरसूत्रम् | chap.-chapter |
| जे.—जेन्द | रे. चि.—रेखाचित्रम् | p.—page |

# भूमिका

प्राचीने काले भारतभुवि वेदाः संस्कृतभाषा च विरेजिरे। तेषामद्य भाषाराज्ये विशिष्टं स्थानम्। यथा तेषामर्थबोधाय निरुक्तव्याकरण-कोशादिग्रन्थास्तदानीं विरचितास्तथा सम्यग्वर्णोच्चारणानुशासनार्थमपि बह्वो ग्रन्था निर्मिता येषां सूक्ष्मतमा विचारा आधुनिकध्वनिविज्ञान-विशारदानां चेतांसि चमत्कुर्वन्ति। वर्णोच्चारणशास्त्रस्य नाम शिक्षेत्यासीद् या खलु वेदाध्ययनायापरिहार्य्या। वेदस्य षडङ्गमध्ये प्राथम्येन शिक्षाया नाम समायाति। अस्मिन् शास्त्रे वर्णोच्चारणार्थमुच्चारणेन्द्रियाणां व्यापारा यथा सूक्ष्मातिसूक्ष्मभावेन प्रकाशितास्तथा मनोरमलौकिको-दाहरणप्रदानेन सुगमभावेन तत्त्वावबोधाय प्रयत्ना अपि विहिताः। अत्र द्वित्राण्युदाहरणानि—

१। व्याघ्री दद्भिर्हरेन् पुत्रान् भीता पाताच्च पीडनात्।
तद्वत् प्रयोजयेद् वर्णांस्तेन लोके महीयते॥
—षोडशश्लोकी शिक्षा (श्लो. १५)

२। यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते।
एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया॥
—पाणिनीयशिक्षा (श्लो. २६)

३। यथा पुत्रवती स्नेहाच्चुम्बती च पुनः पुनः।
तन्मुखं कुरुते प्राज्ञो युञ्जान इति दर्शनम्॥
—अमोघानन्दिनी शिक्षा (श्लो. ६२)

वेदानां सफलाध्ययनार्थं वर्णाशुद्धिपरिहारः, वर्णानां निर्दोषमुच्चारणम्, उदात्तादिस्वराणां यथायथप्रयोगः—एतेषु त्रिषु विषयेषु तदानीन्तना भारतीयाः सविशेषमवधानं दत्तवन्तः। महाभाष्ये एतत्त्रयविषये चर्चा विहिता। यथा—

(क) युद्धे शत्रुसंबोधनावसरे 'हेऽरयः' इति वक्तव्ये केचिदसुरा 'हेलय' इति वर्णाशुद्धिं कृतवन्तो येन 'हेलां कुरु' इत्यर्थ आयातः। फलतश्च युद्धे हेलां कुर्वन्तोऽसुराः पराजिता इति वर्णाशुद्धेः कुपरिणामस्तत्र दर्शितो व्याकरणप्रयोजननिरूपणावसरे । यथा—"तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः" । (१/१/१) इति ।

(ख) वर्णोच्चारणदोषा यथा—"संवृतः कलो ध्मात एणीकृतोऽम्बूकृतोऽर्धको ग्रस्तो निरस्तः प्रगीत उपगीतः क्ष्विण्णो रोमश इति । अपर आह—

ग्रस्तं निरस्तमवलम्बितं निर्हृत—
मम्बूकृतं ध्मातमथो विकम्पितम् ।
संदष्टमेणीकृतमर्धकं द्रुतं
विकीर्णमेताः स्वरदोषभावनाः ॥

अतोऽन्ये व्यञ्जनदोषाः" (१/१/१/२२ वार्तिकस्थ) इति । अनुनासिक-विषमरागता-पीडन-धारणाख्या अन्ये दोषाश्च ऋक्प्रातिशाख्य उक्ताः (१४/३-६) ।

(ग) 'इन्द्रशत्रुर्वर्धस्व' इत्यन्तोदात्ते प्रयोक्तव्य आद्युदात्तः प्रयुक्त इति षष्ठी-तत्पुरुषार्थपरिवर्त्तेन बहुव्रीह्यर्थः प्रकाशितस्तेन वृत्र इन्द्रेण हतो नत्विन्द्रो वृत्रेणेति महाभाष्ये प्रदर्शितम् । यथा—

दुष्टः शब्दः स्वरतो वर्णतो वा
मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् (१/१/१स्थ) इति ।

वर्णोच्चारणशास्त्रकारेषु प्रमुखास्तावद्—याज्ञवल्क्यशौनकपाणिनि-कात्यायन-पतञ्जलि-नारदा-पिशलि-शाकटायनादयो यैः शिक्षा-प्रातिशाख्य-व्याकरणेषूच्चारणान्यनुशिष्टानि, ये चान्ये तैः स्वग्रन्थेषु स्मृता व्यालि-गार्ग्य-वात्स्यप्र-शैत्यायन-कौहलिपुत्रादयः ।

इदमुच्चारणविज्ञानं स्मरणातीतात् समयात् समृद्धं विशेषतो वेदाध्यायिनामत्यन्तोपयोगित्वादद्यापि परम्परया सुरक्षितं मानवीयचिन्ताया दुरारोहं शिखरमारोहति । मानव एव सुव्यक्तं वर्णमुच्चारयितुं प्रभवति, नान्यः । तत्रापि प्रतिव्यक्ति वर्णोच्चारणं भिद्यते । एकस्या अपि व्यक्तेः कालभेदे वर्णोच्चारणं सूक्ष्मतया भिन्नमेव भवति । यथा यथा मानवस्य शरीरं वर्धते क्षीयते वा, तथा तथोच्चारणसाधनान्यङ्गप्रत्यङ्गानि, येनोच्चारणभेदः स्वाभाविकरूपेण समापतति । देशभेदे जलवायुपार्थक्यमप्युच्चारणपार्थक्यं तनुते । ईदृशं पार्थक्यं वेदमन्त्राद्युच्चारणे तात्कालिकभाषासु च समलक्ष्यत । अतस्तत्तच्छास्त्रकाराः स्वग्रन्थेषु स्वाभिमतान्युच्चारणानि प्रादर्शयन् । इत्थं विविधाचार्यपरम्परा स्वस्वशाखासु कानिचिदुच्चारणान्यनुशिष्टवती, यानि तत्तद्ग्रन्थेषु समुपलभ्यन्ते । अनुशासनवेलायां च सर्वैरेवाचार्यैः संक्षेपात्मिका शैल्यवलम्बिता येनास्मिन् विश्लेषणयुगे तेषामनुशासनानां बोधः सुकठिनो भवति । कुत्रचिदाचार्यैः प्रतिपाद्यविषये सिंहावलोकनमेव विहितम्, कुत्रचिच्च केवलं सूचनां दत्त्वा विषयविचारः समापितः, मतान्तरप्रदर्शनस्थले क्वचिदस्पष्टतया तादृशमतानां हेतुः प्रदर्शितः, क्वचन च मौनमवलम्बितम् । अतएव कस्मिंश्चिद् विषये तात्कालिकविविधमतानां सर्वाङ्गीणः पुङ्खानुपुङ्खविचारः प्रायशो दुर्लभ एवैतेषां ग्रन्थेषु ।

अतोऽस्मिन् संदर्भे प्राचीनार्वाचीनग्रन्थानाधारीकृत्य प्रागुक्ताभावनिरसनार्थं यथामति प्रयत्नो विहितः ।

तेषामुच्चारणानामेकत्र विनिवेशनम्, पार्थक्यप्रदर्शनम्, स्थलविशेषेषु यथाशक्ति तत्कारणाभ्यूहनम्, व्याकरणशिक्षाप्रातिशाख्येषु निबद्धानां सूक्ष्मविचाराणामाधुनिकध्वनिविज्ञानालोकेन समुपलम्भनमित्येतान्यस्य संदर्भस्य लक्ष्याणि । अतः Phonemics इति शब्देनाभिधीयमानं विषयं मुख्यतोऽधिकृत्य संदर्भोऽयं प्रवृत्तः ।

यूरोपमहादेश आमेरिकामहादेशश्चेत्येतौ साम्प्रतं ध्वनिविज्ञानक्षेत्रेऽग्रसरौ वर्तेते । यूरोपस्य Daniel Jones महोदय आमेरिका-

महादेशस्य च Pike महोदयोऽत्र प्रथमग्राह्यनामानौ। अन्ताराष्ट्रियध्वनि-विज्ञानपरिषदोच्चारणानां यथार्थाङ्कने (transliteration) साफल्य-मधिगतम्। अधुना विज्ञानस्य विविधानां शाखानामुन्नत्या यानि नूतनानि तथ्यान्यवगम्यन्ते, तेषां प्रयोगेण भाषाविज्ञानमनुदिनं समृद्धिमधिगच्छति। पृथिव्याः सकलदेशानां जीविता मृता वा भाषा अधुना भाषाविज्ञानस्य सुमहत्क्षेत्ररूपेण गृहीताः।

इत्थमल्पेनानेह साधुनिकध्वनिविज्ञानं महता परिश्रमेण तीक्ष्ण-बुद्धिप्रयोगेणानुसन्धानशालायां परीक्षणेन च ध्वनिविषये यानि गुप्तानि तथ्यान्याविश्चकार, तान्यत्यन्तं कौतूहलं सृजन्ति, चमत्कारं चापादयन्ति। एतत्तथ्यनिष्कासने सहायभूतानि विज्ञानोद्भावितानि कानिचिद्यन्त्राण्यत्र नामग्राहं प्रदीयन्ते। तानि च नामानि प्रसिद्धिदृष्ट्याङ्गलभाषायामेव लिख्यन्ते। यथा—Mouth measurer, artificial palate, kymograph, X-ray, oscillograph, spectograph, stribo-laryngoscope, laryngoscope, endoscope, autophono-scope, pattern playback, pitch meter, intensity meter, speech-stretcher, breathing flask इत्यादि।

एषां यन्त्राणामुद्भावनात्पूर्वं प्राचीने काल आचार्यास्तानितानि सूक्ष्माणि वर्णतत्त्वानि स्वीयकुशाग्रबुद्ध्या यत्समुद्भावितवन्तस्तदस्मा कं महदाश्चर्यं संतनोति। मन्यामहे तेषु समयेषु कान्यपि यन्त्राण्युद्भावितानि स्युर्येनैतादृशं ध्वनितत्त्वविषये दुरधिगमं फलमासादितं तैः। अथवा त्रिकालदर्शिनां तेषां साधननिरपेक्षाया विलक्षणप्रतिभाया एव विजृम्भित-मेतत्स्यात्। साधूक्तं श्रीहर्षेण—

"साधने हि नियमोऽन्यजनानां योगिनां तु तपसाऽखिलसिद्धिः"

(नैषधम् ५/३) इति।

शिक्षाप्रातिशाख्यव्याकरणेषु ध्वनितत्त्वस्य यस्यां दिशि विचारा विहितास्तस्यां दिशि साम्प्रतिकविज्ञाने बहुतथ्याविष्कारेऽपि भारतीय-

दर्शनशास्त्रेषु तन्त्रशास्त्रेषु च वर्णानां विषये या दिशः परिगृह्य महानूहापोहो विहितस्तास्तेन सर्वथैवास्पृष्टा वर्तन्ते । तदभावे वर्णविषयको विचारोऽपूर्ण एव स्यादिति मत्वाऽत्र तद्विषयकाणामपि विचाराणां संयोजनपरिशीलन-समन्वया विहिताः । इत्थं विविधानां दर्शनानां विज्ञानानां च भित्तौ प्रतिष्ठापितोऽयं संदर्भस्तन्त्रशास्त्रीयविचारैः समुपबृंहितो यथा केनाप्यङ्गेन हीनो न स्यात्तदर्थं सीमितपरिसरमध्ये यथाशक्ति व्यवसितम् । एतत्सन्दर्भगताऽपूर्वता वक्ष्यमाणविषयानाधारीकरोति—

(१) वैमत्यग्रस्तेषु विषयेषु स्वं मतमुपस्थापितम् । यथा वर्णस्य नित्यत्वानित्यत्वपरीक्षायाम् (पृ. ४५, ४६) ।

(२) फुप्फुसाद्वायुव्यापार आरभ्यत इति ध्वनिविज्ञानमतेन सह मूलाधारचक्रक्षेत्रात्पायुस्थानात्तद्व्यापारप्रकाशकं तन्त्रव्याकरणादिमतं संयोजितम् । (पृ. ४७, ६१) ।

(३) वायोर्गुणकर्मभेदाद्वर्णभेद उत्प्रेक्षितः (पृ. ६३) । स च तृतीयचतुर्थपञ्चमपरिच्छेदेषु प्रमाणितो यथावसरं स्मारितश्च ।

(४) संस्कृतशास्त्रे शषसानां महाप्राणत्वे गृहीतेऽपि पाश्चात्त्यैस्तेषामल्पप्राणत्वोक्त्या संस्कृतशास्त्रे वाय्वाधिक्यस्य पाश्चात्त्यशास्त्रे च वाय्वाघाततीव्रताया महाप्राणत्वप्रयोजकत्वमभ्यूहितम् । (पृ. ६४, ६५)

(५) उच्चारणस्थान-करण-प्रयत्न-वर्णमात्रादिविषये विविधग्रन्थेभ्यो विरुद्धाविरुद्धमतान्येकत्र समाहृत्य विवेचितम् । (७३, ७७, ८४ क, ख, १००, ११२, १२१) ।

(६) प्राचीनाधुनिकवर्णशास्त्रमतसमन्वयेन वाग्यन्त्रचित्रं कल्पितम् । (पृ. ६३) ।

(७) द्वयोरुच्चारणस्थानयोर्मूर्धेति व्यपदेशोऽनुमितः ।

(पृ. १०४, १०५)

(८) अनुस्वारस्य विविधोच्चारणे हेतुराविष्कृतः (पृ. १६०-१६३) ।

(९) विविधविरुद्धोक्तिभिराच्छन्नस्य रङ्गस्य यथामति स्वरूपं निर्धारितम्। (पृ. १६९-१७६)।

(१०) वर्णाभास इति नूतनः प्रकारः कल्पितः। (पृ. १८७) इत्यादि।

पञ्चभिः परिच्छेदैः परिच्छिन्नोऽयं सदर्भः। अस्य योजना तावत्-प्रथमतो वर्णस्वरूपस्पष्टीकरणम्, ततो वर्णस्योद्गमक्रमाख्यानम्। एतद्द्वयस्य चर्चा प्रथमे द्वितीये च परिच्छेदे यथाक्रम विहिता। वर्णोच्चारणे मुखविवरात्पूर्वं मुखविवरे च विधीयमाना यत्ना यथाक्रमं तृतीयचतुर्थ परिच्छेदयोर्विषयौ। अन्तिमपरिच्छेदे केषांचिद् विकसितानां केषांचिच्च सांप्रदायिकानां वर्णानां स्वरूपनिरूपणपुरःसरं विविधमतानुसारं वर्णमालाः प्रदत्ताः।

प्रथमपरिच्छेदस्य नाम वर्णस्य स्वभावः। (वधिराणां श्रवणाभावेन प्रमाणितो वर्णग्राहकश्रवणेन्द्रियाच्छ्रवणयन्त्रस्य भेदः, सर्वेषां वर्णानां सर्वासु भाषास्वव्यवहारः (यथा—इङ्लिश् F इत्यस्य संस्कृते), वर्णविशेषा भाषाविशेषस्यैकान्ततो न निजस्वम् (तेन कवर्णः न केवलं संस्कृत वर्णः, अपि तु ओडिया-हिन्द्यादि वर्णोऽपि), वर्णाक्षरयोः क्वचित् पार्थक्यम् (यथा स्था इत्यत्र स्, थ्, आ इति वर्णत्रयसत्त्वेऽपि तदेकमेवाक्षरम्), ध्वनिग्रामो (Phoneme) वर्णकुलं वर्णपरिवारश्चेत्येते पर्यायवाचकाः, संध्वनि-(=alophone)भिर्ध्वनिग्रामघटनम् (यथा [अ] [आ] [आ३] इत्यादिभिः /अ/ इत्यस्य), वर्णशब्दः संध्वनिध्वनिग्रामयोर्वाचकः, वर्णो ध्वनिः शब्द इत्येतेषां क्वचिद् विभिन्नविषयता (यथा- कवर्णः, भेरीध्वनिः, कण्ठशब्दः), क्वचिल्लिपिनामवर्णनाम्नोः पार्थक्यम् (यथा के (k) 'क' इत्येतयोः), अविभाज्य उच्चारणावयवो वर्णः (यथा—अ, क्), क्वचिदेकाधिकलिपिभिरेकवर्णोच्चारणम् (यथा b+h=भ), क्वचिदेकलिप्यैकाधिकवर्णोच्चारणम् (यथा X=क्स्), कुत्रचिल्लिपिसत्त्वेऽप्यनुच्चारणं वर्णस्य (यथा talk इत्यत्र (ल) कारस्य), विविधदर्शन प्रातिशाख्य-शिक्षा-व्याकरण-तन्त्र-विज्ञानमतानुसारं वर्णानां (१) नित्यानित्यत्वे (२) वागिन्द्रियो-

त्पन्नानां तेषां श्रवणेन्द्रियेण ग्रहणे विविधा विप्रत्तिपत्तयः (३) वर्णपदार्थ इत्येते विषयास्तत्रोपक्षिप्ताः ।

द्वितीयपरिच्छेदे वर्णोद्गमप्रकारो विवेचितः। वर्णसंबद्धानां परा-पश्यन्ती-मध्यमा-वैखरीति चतसृणां वाचामभिव्यक्तिकेन्द्राणि, तत्र विविधाधिकारिबोध्यो वर्णानां विविध उन्मेषः, परावाचः कैश्चिदनुल्लेखः, मध्यमावैखर्योरुपांश्वादयः सप्त स्तराः, सारदातिलकाहिर्बुध्न्यसंहिता-कामकलाविलासतन्त्र-पाणिनीयाशिक्षा-वाक्यपदीयानां मतेन वर्णानां परममूलस्य वर्णोद्गमक्रमस्य च निरूपणम्-इत्येते विषया अत्रोट्टङ्किताः ।

तृतीयपरिच्छेदे बाह्यप्रयत्ना निरूपिताः । बाह्याभ्यन्तरप्रयत्नलक्षणम्, वायोर्गुणकर्मभेदाद्वर्णभेदः, वायुवेगभेदादल्पप्राणमहाप्राणत्वे, समकाला-वच्छिन्नवायुपरिमाणस्य भेदादुदात्तादिस्वराणामुत्पत्तिः, परमाणुमात्रात आरभ्य षण्मात्रापर्यन्तमुपयुज्यमानकालेन वर्णवर्णांशोच्चारणम्, कालानु-पातेन वायुपरिमाणभेदाद्ध्रस्वदीर्घादयः, वृत्तेर्वर्णभेदकत्वाभावः, अवरुद्धानवरुद्धस्वरयन्त्रमार्गेण बहिर्निर्गच्छता वायुनाऽघोषघोषवर्णो-त्पत्तिः, अधिजिह्वया त्रिविधं नियन्त्रितस्य वायोर्निःसरणविशेषकृतमानु-नासिक्यम्, बाह्यप्रयत्नप्रकाराणां परिसंख्यानम्, सर्वसम्मतसंस्कृतवर्णा इत्येते विषया अस्मिन् परिच्छेदे निबद्धाः ।

चतुर्थपरिच्छेदे आभ्यन्तरप्रयत्नाः परिशीलिताः । जिह्वौष्ठनियमितं वायोर्निःसरणम्, उच्चारणस्थानानां परिसंख्याने निरूपण उत्पद्यमानवर्ण-कथने च मतभेदाः, वाग्यन्त्रचित्रम्, प्रक्रमस्थानानि, करणम्, करणानां गतिस्थिती, प्राच्यपाश्चात्यध्वनिशास्त्रानुसारं मुखविवराभ्यन्तरप्रयत्न-मीमांसा, उच्चारणस्थानेषु वायोराघाताः, सवर्णा अन्तराः (सदृशा)श्च वर्णाः, आभ्यन्तरबाह्यप्रयत्नयोः पौर्वापर्यम्—इत्येते विषया अत्र प्रपञ्चिताः ।

पञ्चमपरिच्छेदेऽवशिष्टसंस्कृतवर्णविषये चर्चा विहिता । २३२ संख्यकवर्णो-ल्लेखः, सर्वसम्मतवर्णगतभेदोपभेदानां व्यञ्जनद्वयात्मकस्य क्षस्याविकसिता नामयोगवाहवर्णानां च संकलनेन २३२ संख्यालाभः, ळळ्हौ, अयोगवाहा-

स्तेषां संख्या च, विसर्गः, जिह्वामूलीयोपध्मानीयौ, अनुस्वारः, नासिक्यः, यमाः, ऋ-ऌ, रङ्गः, स्वरभक्तिः, वर्णाभासः, विविधमतानुसारं विविध-संख्यका वर्णमाला, उपसंहारः—एते विषया गर्भिता अत्र परिच्छेदे।

इत्थं 'संस्कृतवर्णानां स्वरूपं समुत्पत्तिश्च' इति केन्द्रीकृत्य सर्वेऽपि परिच्छेदा एतद्विषयस्य विविधदिशामाकलने प्रवृत्ताः। विषयाणां स्पष्टी-करणायैकादश कोष्ठकानि, त्रीणि चित्राणि, द्वे रेखाचित्रे चेत्येतानि तत्त-त्स्थानेषु विन्यस्तानि। वर्णविषयकविलुप्यमानभारतीयप्राचीनग्रन्थेभ्यः सारसंग्रहे, तद्विश्लेषण आधुनिकविचारैः संयोजने च प्रवृत्तिर्व्याकरण-निरुक्त-शिक्षा-भाषाविज्ञान-तन्त्र-दर्शनादिशास्त्रपठनसमयादेव जागृता। एतद्विषये मनीषिभिश्चर्चा विहिताः। विद्वत्परिषदि प्रबन्धाः पठिताः। दिल्ल्याम् १९७२तमे ख्रीष्टाब्देऽन्ताराष्ट्रियसंस्कृतसम्मेलने "ऋवर्णस्य स्वरभक्तेश्च स्वरूपम्" इति, धरवारे च १९७९ तमे ख्रीष्टाब्दे प्राच्य-विद्यासम्मेलने विसर्गविमर्श इति निबन्धौ पठितौ। तौ च सहृदयैर्विद्वद्भिः-साग्रहं स्वीकृत्य समुत्साहितोऽहम्। एतन्निबन्धद्वयगता विषयाः सन्दर्भे-ऽस्मिन् पञ्चमपरिच्छेदे सन्निवेशिताः। इत्थं बहुकालात्पूर्वमुदितेयं प्रवृत्तिः साम्प्रतिकसन्दर्भलेखे कारणतां गता।

अस्मिन् कठिने कर्मणि वेद-वेदान्त-व्याकरणतीर्थ-एम्. ए.-डी. फिल् इति नैकोपाधिभाजः यादवपुरविश्वविद्यालयस्य संस्कृतविभाग-मुख्याः श्रीमन्तः प्राध्यापक ड० सीतानाथगोस्वामिमहोदया निर्देशकत्वं सानुकम्पं स्वीकृत्य भाषायाः स्पष्टतायां विषयसंयोजने सज्जायां चामूल्यानुपदेशान् प्रदायास्य सन्दर्भस्य पूर्णतायां सहायतामारचयन्निति तान् महानुभावान् कृतज्ञः संस्मरामि।

विविधजटिलशास्त्रीय-कठिनप्रायोगिकेत्युभयविषयोपजीव्यकेऽस्मिन् सन्दर्भे स्खलनमवश्यम्भावि। अत उदारहृदयानां विज्ञानां पाठकानां समीपे तदर्थं क्षमामुपयाचे-इति।

विनीतो लेखकः

# प्रथमः परिच्छेदः

## वर्णस्य स्वभावः

### १ । वर्णस्तदिन्द्रियं च

वर्णः खलु वागिन्द्रियविशिष्टैर्मनुष्यैरुच्चार्यते, श्रवणेन्द्रियविशिष्टैश्च श्रूयते । यत्तु मूका नैव यथायथमुच्चारयितुं प्रभवन्ति, बधिराश्च नैव सम्यक् श्रोतुं शक्नुवन्ति, तत्रेन्द्रियवैकल्यं हेतुरिति प्रसिद्धम् । असत्यपीन्द्रियवैकल्ये कस्यचित् प्रतिबन्धकस्य सद्भावादुच्चारणं श्रवणं च नैव भवितुमर्हति । तथा च प्रशस्तपादभाष्यम्—"श्रोत्रं पुनः श्रवणविवरसंज्ञको नभोदेशः * शब्दनिमित्तोपभोगप्रापकधर्माधर्मोपनिबद्धः । तस्य च नित्यत्वे सत्युपनिबन्धकवैकल्याद् बाधिर्यमिति" (पृ. ११३) ।

अस्माद् भाष्याज् ज्ञायते यच्छ्रोत्रेन्द्रियपदेन कर्णयन्त्रस्य परामर्शो न भवति; अपि तु कर्णविवराकाशस्य । एतत्स्वारस्येन वागिन्द्रियपदेनापि वाग्यन्त्रं नैव ग्रहणीयम्, अपि तु वाग्यन्त्रवर्ति किमपि वस्तु । इन्द्रियं ह्यन्यत्, कर्णशष्कुल्यक्षिगोलकादिकं तदाधारभूतं चान्यत् ।

वाग्यन्त्र-कर्णयन्त्रादिकं प्रत्यक्षविषयीभूतं भवति, तत्रत्यमिन्द्रियं तु न तथा । उच्चारणश्रवणादितत्तत्कार्यदर्शनेन कारणभूतानीन्द्रियाण्यनुमीयन्त एव । तदुक्तं न्यायवार्त्तिके—"इन्द्रियवृत्तयोऽतीन्द्रियाः । इदमनेनेन्द्रियेण गृह्यते, नेदमनेनेति न कस्यचित् प्रत्यक्षमस्ति । किन्तु तद्भावाभावानुविधानाद्रूपादिज्ञानैरिन्द्रियादयोऽनुमीयन्ते" (१/१/३३ सूत्रस्थ) इति ।

---

*[ (१) वर्णः (२) वर्णसंघातः (३) तदितरो ध्वनिर्वेति शब्दशब्दस्य त्रयोऽर्थाः शास्त्रेषूपलभ्यन्ते । अस्मिन् सन्दर्भे खलु शब्दशब्दस्तेष्वर्थेष्वेव प्रयुज्यते । ]

## २ । भाषा वर्णश्च

मानवमुखेन भाष्यन्त इति भाषाः संस्कृत-इङ्ग्लिश्-हिन्दी-ओड़िया-वेङ्गालीप्रभृतयः । सर्वा अपि भाषा वर्णैर्घटिताः सत्यम् ; परन्तु सर्वेऽपि वर्णाः सर्वासु भाषासु नैव व्यवह्रियन्ते । उच्चारयितृवर्गस्य प्रकृतिः, जलवायुपरिस्थितिः, अपरैरुच्चारयितृवर्गैः सम्पर्क इत्यादिविविधकारण-वशात् कस्यामपि भाषायां केचिदेव वर्णा उच्चार्यन्ते, न सर्वे । यथा—इङ्ग्लिश्भाषादिषूच्चार्यमाणस्य 'F' इत्यस्योच्चारणम् ओड़ियासंस्कृतादिषु नास्ति । शुक्लयजुर्वेदस्य काण्वशाखायां व्यवह्रियमाणो ळ ओड़ियाभाषायां विद्यमानोऽपि तद्वेदस्य माध्यन्दिनशाखायां नास्ति । तथा च शुक्लयजुः-प्रातिशाख्यम्—"तस्मिन् ळळ्ह जिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम्" (८/२६) इति । प्राकृते ऐ-औ इति वर्णद्वयं न विद्यते । तत्स्थाने ए-ओ इत्यनयोः अइ-अउ इत्यनयोर्वा व्यवहारो भवति । यथा—दैवम्-देव्वं (म. प्रा.) गौतमः—गोतमो (म. प्रा.) दैत्यः—दइच्चो (म.प्रा.) कौरवः—कउरवो (म. प्रा.) । "ऐत एत्, औत ओत्, दैत्यादिष्वइ, पौरादिष्वउ" (१/३५, ४१, ३६, ४२) इति प्राकृतप्रकाशोऽत्र प्रमाणम् ।

यो वर्णो यस्यां भाषायां व्यवह्रियते, स तद्भाषावर्णः । यथा—'क' इति संस्कृतभाषावर्णः । अयं हिन्दी-ओड़िया-वेङ्गालीभाषास्वप्युच्चार्यमाण-स्तासामपि भाषाणां वर्णो भवितुमर्हति । यतः कोऽपि वर्णः कस्या अपि भाषाया एकान्ततो निजस्वं न । स च वर्णो वस्तुतः सूक्ष्मोच्चारणदृष्ट्या प्रतिभाषं भिद्यमानोऽपि स्थूलतया स एव वर्ण इति प्रत्यभिज्ञायते । एक-जातीयोच्चारणप्रयत्नस्य सर्वत्राप्यपेक्षितत्वात् । तस्मात् सन्दर्भेऽस्मिन् वर्णप्रसङ्गे मुख्यभावेन संस्कृतभाषाशब्दानां गौणभावेन च भारतयूरोपीय-भाषापरिवारगतानां संस्कृतेतरभाषाशब्दानां चर्चा विधीयते ।

## ३। वर्णः, अक्षरं च

उच्चार्यमाणानां शब्दानां विभागे कृते सूक्ष्मतमा अवयवाः खलु वर्णा इत्याख्यायन्ते। तेन 'स्था' इत्यक्षरे सकारथकाराकाराः प्रत्येकं वर्णा भवन्ति, विभक्तानामेषां पुनर्विभाजनासम्भवात्।

केचिद् वर्णाक्षरयोः समपर्यायत्वं मन्यन्ते। यथा—"अक्षरं न क्षरं विद्यादश्नोतेस्तु सरोऽक्षरम्। वर्णं वाहुः पूर्वसूत्रे" इति महाभाष्यम् (१/१/८ मा. सू. वार्त्तिक)। "वर्णं तु चाक्षरे" (३/३/४८) इत्यमरः। "सर्वाण्यक्षराणि गुरूणि" इति वक्तव्ये "सर्वे वर्णा दीर्घा यस्याम्" (श्लो॰-७) इति श्रुतबोधः। वस्तुतस्तु स्थूलव्यवहारोऽयम्। सूक्ष्मेक्षिकया विचारे तु वर्णाक्षरयोर्भेदः स्पष्टो भवति। तथाहि स्वतन्त्रोच्चार्यमाणत्वमक्षरस्य, न तु वर्णस्य। यद्यपि 'अ' इत्यादयो वर्णा अपि स्वतन्त्रतयोच्चार्यन्त एव, तथापि तादृशमुच्चारणमक्षरत्वमुखेनैवेति विवेचनीयम्।

तैत्तिरीयप्रातिशाख्यं भेदमिमं समर्थयति। तथा च तत्रत्यानि सूत्राणि—"स्वरोऽक्षरम्, सहाद्यैर्व्यञ्जनैः, उत्तरैश्चावसितैः" (१/९९-१०१) इति। एतत्सूत्रत्रयानुसारं यथाक्रमम् आ, स्था, अर्च् इत्यादीनि प्रत्येकमक्षराणि। एषु आ इत्येकमक्षरम्, एको वर्णश्च। 'स्था', 'अर्च्', इत्यनयोस्तु प्रत्येकं वर्णत्रयविशिष्टत्वेऽप्येकैकाक्षरत्वमेव।

एतदनुसारमक्षरत्वलब्धये स्वरस्यैवान्वयव्यतिरेकानुविधायित्वम्। व्यञ्जनस्य साहचर्यं तु तदर्थं नैव नितान्तमपेक्ष्यते। परन्तु स्वरं विनाऽपि केवलं व्यञ्जनान्यक्षराणि भवन्ति क्वचिद् भारतयूरोपीयेतरवर्गभाषासु। यथा—आफ्रीकाया इबो-भाषायां 'ङ्गुङ्गुङ्' इति स्वरशून्यमप्यक्षरमेव गृह्यते। चेक्-रुमानिअन्भाषास्वप्येवम्[1]।

1. भाषाविज्ञान (पृ. ३८५)।

एतदव्याप्तिपरिहाराय भाषाशास्त्रिणः प्रातिशाख्यलक्षणस्याधारभूतं मूलतत्त्वमनुसंधाय व्यापकलक्षणं प्रास्तुवन् । यथा—R. M. S. Heffnerमहोदयः—"एकश्वासवेगोच्चार्यत्वमक्षरत्वम्" इति लक्षणं चक्रे[2] । अनेन लक्षणेन स्वररहितान्यक्षराणि क्रोडीक्रियन्ते ।

लक्षणमिदमुच्चारणनिबन्धनम् । श्रवणनिबन्धनं लक्षणान्तरमपि भाषातत्त्वविद्भिर्विरचितम् । (१) मुखरता (Sonority) परिवहनसामर्थ्यं (carrying power) वा (२) आयतिः (Length) (३) स्वराघातबलाघातौ (Stress) (४) काकुध्वनिः (Intonation)—एषां व्यस्तानां समस्तानां वा वैशिष्ट्यं वर्णश्रवणाय प्रमुखताम् (Prominence) आपादयतीति ब्रुवन्[3] Daniel Jones महोदयस्तादृशप्रमुखताविशिष्टं वर्णं तुद्रवर्णगोष्ठीं वाऽक्षरं मन्यते । कर्णमार्गे पदवाक्यानां तरङ्गाकारेणानुभूयमानत्वम्, तत्रापि मुखरवर्णानां तादृशतरङ्गपर्वतशृङ्गत्वमिति च तेन प्रतिपादितम्[4] ।

## ४ । वर्णपदेन संध्वनेर्ध्वनिग्रामस्य च ग्रहणम्

केचिद् वर्णा अनेकप्रकारा इति व्याकरणाज् ज्ञायते । यथा—अवर्णस्य ह्रस्वरूपम् अ इति, दीर्घरूपम् आ इति, प्लुतरूपं च आ ३ इति ।

---

2. "Each syllable is basically a movement-complex in which the larger underlying movement is the breath-pulse or thrust of the chest musculature, which creates a compression of air in the lungs"—General Phonetics ( Sec. 3.06 )

3. "The prominence of Sounds may be due to inherent sonority (carrying power), to length or to stress or to special intonation or to combination of these"—An Outline of English Phonetics (Sec. 209, Chap. 12, p. 54)

4. "Syllable is essentially a small sound-sequence containing a peak of prominence"—*Ibid* (Sec. 910, Chap. 29. p. 246).

तेषां त्रयाणां प्रत्येकमुदात्तानुदात्तस्वरितत्वेन त्रैविध्यादवर्णो नवविधः। सर्वेऽपि ते नव भेदा अनुनासिकाननुनासिकभेदेन द्विगुणिता अवर्णमष्टादशप्रभेदविशिष्टं विदधति। तथा च सिद्धान्तकौमुदी—"अ-इ-उ-ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः" (१/१/८सूत्रस्थ) इति।

न केवलं केचिदेव, अपितु सर्वेऽपि वर्णाः परिस्थितिभेदेन भिद्यन्त इति ध्वनिविज्ञानविदः। यथा—"Keel-Cool—शब्दयोः सममेव ककारे स्थितेऽपि तस्योच्चारणे द्वैविध्यमेव। तथाहि—Keel शब्दे ककारोच्चारणवेलायामग्रस्वरमीकारमुच्चारयितुं जिह्वा प्रयतत इति ककारोऽपि तत्रोच्चारणस्थानस्याग्रभाग एवोच्चार्यते। Cool शब्दे तु पश्चात्स्वरमूकारमुच्चारयितुं प्रयतमाना जिह्वा ककारमप्युच्चारणस्थानस्य पश्चाद्भाग एवोच्चारयतीत्यनयोर्भेदोऽस्ति" इति R. M. S. Heffner कृते General Phonetics—(Sec. 04. Chap. 1) ग्रन्थे समीक्षितम्। एतदनुसारं विवेचने संस्कृतस्य कूलकीलादिशब्दानामपि ककारौ परस्परं भिन्नौ भवेताम्।

एकस्यैव वर्णस्येमे प्रभेदाः संध्वनि (alophone) नाम्ना भाषाशास्त्रे व्यपदिष्टाः[5]। संध्वनेश्चिह्नम् '[ ]' इति। यथा—[अ]। अनेकैर्मनुष्यैरेको मनुष्यपरिवार इव संध्वनिभिरेको वर्णपरिवारो भवति। वर्णपरिवारस्य ध्वनिग्राम (Phoneme) इति भाषाशास्त्रगतं

5. (a) "The individual sounds which compose a phoneme are its alophones"—Outline of Linguistic Analysis (Chap. 3. p. 40)

(b) Pike भद्रस्तु इमं व्यपदिशति—"A submember of the phoneme, a non-significant variety of a phoneme or a conditioned variety of a phoneme"—Phonemics (p. 23[illegible])

नाम[6] । एकवर्णपरिवारगतेभ्यो विविधरूपेभ्यो भूयस्त्वेन व्यवह्रियमाणं रूपं तद्वर्णपरिवारस्य प्रतिनिधिभावेन गृह्यत इति Daniel Jones महाशयस्य[7] मतम् । ध्वनिग्रामस्य चिह्नम् '/ /' इति । यथा—/ अ / ।

महाभाष्ये संध्वनिर्वर्णाकृतिशब्देन ध्वनिग्रामश्च वर्णकुलशब्देन व्यपदिष्टः । यथा—"अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति" (आ. १ मा. सू. १ स्थ) इति । 'अ' इति / अ / कुलस्य सर्वेषाम् [ अ ] काराणां प्रतिनिधिरिति भाषाशास्त्रीयसांकेतिक-चिह्नयुक्तोऽर्थो महाभाष्य-वचनस्यास्य भवितुमर्हति ।

संस्कृते संध्वन्यर्थे ध्वनिग्रामार्थे च साधारणतया वर्णशब्दः प्रयुज्यते । यथा सिद्धान्तकौमुद्याम्—"लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा' (१/३/२ सूत्रस्थ) इत्यत्रावर्णशब्दो लण्गतमवर्ण-विशेषं निर्दिशन् संध्वनिमेव परामृशति । "ऋलृवर्णयोर्मिथः सावर्ण्यं

6. (a) "Specifically then, a phoneme is one of the significant units of sound arrived at for a particular language of the analytical procedures developed from the basic premises previously presented"—Phonemics (p. 63)

   (b) "A phoneme is a class of phonetically similar sounds"—Outline of Linguistic Analysis (p. 40)

7. "A phoneme may be described roughly a family of sounds consisting of an important sound of the language (Generally the most frequently used member of the family) together with other related sounds which take its place in particular sound-sequences or under particular conditions of length or stress or intonation"—An Outline of English Phonetics (Sec. 191, Chap. 10, p. 49)

वाच्यम्" (८/२/१ सूत्रस्थ) इति तत्रत्ये वार्तिके तु सामान्यत ऋलृविषये वचनाद् ऋलृवर्गकुलयोर्बोधः, तेन ऋलृसामान्येन सर्वविशेषाणां परामर्शात् ।

## ५ । वर्णो ध्वनिः शब्दश्च ।

वैयाकरणैः शब्दत्रयं स्वीकृतम्—

(१) व्यङ्ग्यभूतो ब्रह्मेति व्यपदिष्टो नित्योऽव्यक्तो वर्णादिस्फोटात्मकः शब्दः ।

(२) तस्य व्यञ्जक उच्चारणक्षणस्थाय्यनित्यः प्राकृतध्वनिरिति व्यपदिष्टो वर्णात्मकः शब्दः ।

(३) प्राकृतध्वनेरुच्चारणानन्तरमारभ्यमाणो वागिन्द्रिये चिराचिरस्थितिसम्पादकः श्रोत्रेन्द्रिये च चिराचिरग्रहणसम्पादकोऽनित्यो वैकृतध्वनिरिति व्यपदिष्टः शब्दः ।

तथा च भावप्रदीपोद्धृतः संग्रहः —

"स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते"

(१/७७ श्लोकस्थ) ।

भर्तृहरिश्च—

"शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥"

(वाक्यपदीयम् १/७७, ७८) इति

अत्र प्रथमद्वितीयौ शब्दौ वर्णौ । तृतीयः केवलं वर्णस्य ध्वनिः । सोऽप्युपचारवशात् कैश्चिद् वर्ण इति व्यवह्रियते । अन्तिमौ द्वौ कैश्चिद् ध्वनिपदेन व्यपदिश्येते । प्रथमस्य रूपमव्यक्तमिति तस्य ध्वननकार्याभावान्न ध्वनित्वम् । द्वितीयतृतीयौ शास्त्रान्तरे भाषाविज्ञाने च पृथक्कृतस्वरूपेण न

विविच्येते । तत्र ध्वनि (Sound) शब्दः प्रयुज्यते । यथा—क-ध्वनिः । प्रथमतत्त्वस्य शब्दब्रह्मणः स्वीकारस्तन्त्रशास्त्रे वर्त्तते, परन्तु न तत्स्फोट-रूपम्; तत्तु चैतन्यरूपम् । यथा—

"चैतन्यं सर्वभूतेषु शब्दब्रह्मेति मे मतिः" ।

(सारदातिलक श्लो. १/१३) इति ।

शास्त्रान्तरेषु तु शब्दब्रह्मस्वीकारो नैव विलोक्यते ।

एते त्रयः शब्दा नैयायिकवैशेषिकाणां वर्णाख्यशब्दमधिकृत्य प्रोक्ताः । एतद्व्यातिरिक्तो ध्वन्याख्य शब्दस्तेषामस्ति यः संयोगविभाग-वशादुत्पद्यते । यथा—हस्तमृदङ्गादिसंयोगजन्यो झाङ्कारादिशब्दः, वंशे पाट्यमाने दलद्वयविभागजश्चटचटाशब्दः । संयोगविभागजाः शब्दा वैयाकरणानामभिप्रेता अपि स्वप्रतिपाद्यविषयानुपयोगान्न प्रदर्शिताः ।

विषयदेश उत्पन्नस्य शब्दस्य श्रवणेन्द्रियेण ग्रहणसम्भवात्तदर्थं शब्दजशब्द इति शब्दस्य प्रकारविशेषः स्वीकृतो नैयायिकवैशेषिकैः; स च न सर्वसम्मतः ।

शास्त्रेऽर्थप्रतिपादको वर्णो वर्णसंघातो वा शब्द इत्युच्यते । तथा चामरः—"शास्त्रे शब्दस्तु वाचकः" (१/६/२) इति । महाभाष्येऽपि "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति, स शब्दः" (१/१/१) इत्युक्तम् । शब्दशब्दस्यायं पारिभाषिकोऽर्थः । यथा ध्वनिशब्दस्य व्यङ्ग्यप्रधानकं काव्यमर्थः प्रोक्तो ध्वन्यालोके—

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः" ।

(१/१३)

इति तद्वत् । महाभाष्ये शब्दशब्दस्य साधारणप्रचलितः श्रोत्रग्राह्य-रूपार्थोऽपि प्रकाशितः । यथा—"श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभि-

ज्वालेत आकाशदेशः शब्दः" (आ. २ मा. सू. १स्थ) इति। एते सर्वेऽर्थाः प्रकाशिताः श्रीमद्भागवते। यथा—

"अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च
तन्मात्रत्वञ्च नभसो लक्षणं कवयो विदुः"
(३/२६/३३) इति।

अत्र प्रथमार्धेन वाचकशब्दो द्वितीयार्धेन च श्रवणविषयो व्यक्तो व्यञ्जकाभावादव्यक्तश्चेति द्वौ शब्दाविति संकलनेन त्रयः शब्दाः संगृहीताः।

इत्थं बहुविधेषु व्यवहारेषु वर्त्तमानेषु स्फुटावबोधार्थं वाचकार्थे ध्वनिवर्णोभयसामान्यार्थे च शब्दशब्दः प्रयोज्यः। वर्णार्थे तु वर्णशब्द एव। वर्णेतरशब्दार्थे च ध्वनिशब्दप्रयोगः श्रेयान्।

## ६। लिपिर्वर्णश्च

वर्ण्यन्ते वर्णनीयविषया एभिरिति वर्णशब्दस्य व्युत्पत्तिर्भवितुमर्हति। तेनासौ अ-इ-उ-प्रभृतीनुच्चारणध्वनीनभिधत्ते। परवर्तिनि लिपियुगे नीलरक्तादिवर्णयुक्तया मस्या लेपनक्रियाविधानाल्लिप्यर्थेऽपि वर्णशब्दस्य व्यवहारः प्रवृत्त इति संभाव्यते। संस्कृतादिषु 'क'स्य लिपिनाम 'क' इति, उच्चारणनामापि 'क' इत्येव। परन्तु कासुचिद् भाषासु वर्णानामुच्चारणनामलिपिनाम्नोर्भेदो दृश्यते। यथा—Keep-Quite-Cat इति पदेषु के-क्यू-सी इति नामानि खलु लिपीनामेव, न तु वर्णानाम्। वर्णनाम त्वेषु त्रिष्वपि 'क' एव। एवं ग्रीकृभाषीयः κ इति रूपेण लिख्यमानो वर्णो वस्तुतः ककार एव। काप्पा इति तु लिपिनाम।

इङ्गलिश्भाषायां व्यवहृतस्य 'दाट्' शब्दस्य 'that' इति लेखे चत्वारोऽवयवाः, उच्चारणे तु त्रयोऽवयवाः। ईदृश्यामवस्थायां तत्र

वर्णत्रयकल्पनैव श्रेयसी, वर्णशब्देनोच्चार्यमाणस्यैव मुख्यतो ग्रहणात्। अत एव Schrift शब्दे S. C. H. R. I. P. H. T. इति वर्णाष्टक-स्थितिं मन्यमानः Grimm भद्रः Jesperson भद्रेणोपहसितः[8]। तत्र ch लिपिभ्यामेकवर्णस्य f लिप्या चैकवर्णस्य प्रातिनिध्यकरणेन वर्णषट्कसद्भावात्। एतन्मतानुसारं समीक्षायाम्—

(१) लिपित्रयघटितेऽपि Box शब्दे चत्वार एव वर्णा विद्यन्ते, 'X' इत्यस्य ककारसकारात्मकवर्णद्वयरूपत्वात्।

(२) नक्तंशब्दानुरूपे night शब्दे च gh इति लेखेऽप्युच्चारण-संबन्धाभावान्न तयोर्वर्णत्वं वक्तुमुचितम्। खीष्टीयपञ्चदशशतकात् पूर्व-मीदृशस्थलेषु ghप्रभृतीनामुच्चारणमासीदिति त्वन्यत्[9]। नैतावता साम्प्रतमनुच्चार्यमाणत्वेऽपि वास्तविकवर्णत्वं सिध्यति। उच्चारणनिबन्धन-त्वाद् वर्णः स्वाभाविकः, लिपिस्तु कृत्रिमा।

---

8. Grimm was anything but a phonetician, and sometimes says things which now-a-days cannot but produce a smile, as when he says (gr. 1.3) "in our word "Schrift", for instance, we express eight sounds through seven signs, for 'f' stands for 'ph', thus he earnestly believes that "Sch" contains three sounds, s, and the aspirate ch=c+h !—Language, Its Nature, Development and origin (Sec. 5, Chap. 2, p. 46)

9. While the fifteenth century greatly increased the number of consonant groups by making the 'e' mute in monthes helped etc., the following centuries, on the contrary, lightened such groups as -ght in "night" "thought" where the "back open" Consonant as German 'ch' is still spoken in (scotch) and the initial kn-, gn-, in know, gnow etc—Growth And Structure of the English Language (Sec. 5, chap-1, p. 4)

---

× × प्रथमः कण्ठताल्वाद्यभिघातजन्यः, द्वितीया तु मनुष्येण कल्पिता। प्रथमस्य स्थानमुच्चारणेन्द्रियम्, द्वितीयस्यास्तु लेखाधारभूतं किमपि वस्तु। प्रथम उच्चारणानन्तरप्रध्वंसी, द्वितीया तु बहुसमयस्थायिन्यपि।

## ७। वर्णो नित्योऽनित्यो वा।

केचिद् वदन्ति—वर्णो नित्यः, न तु कार्यः। स सर्वदैव विद्यमानोऽपि व्यञ्जकाभावान्न सर्वदोपलभ्यते। उच्चारणप्रयत्नानन्तरमेव सोऽभिव्यज्यते। अभिव्यक्तश्च प्रयत्ने विरते तिरोहितो भवति, न तु नश्यति। "वाचा विरूपनित्यया" (ऋक्संहिता ८/८/७५/६) इति श्रुतिं ते प्रमाणमुदाहरन्ति।

अन्ये तु वर्णं कार्यं मन्यमाना अनित्यं वदन्ति। तेषां मते वर्णः प्रयत्नवशादुत्पद्यते, उत्पन्नश्च नश्यति। कदाचित् कोलाहलादौ वर्णस्य वृद्धिर्भवति, कदाचिच्च क्षयो भवति।

अनित्यत्ववादिनां युक्तयो नित्यत्ववादिनां च प्रतियुक्तय एवंप्राया भवन्ति—

(i) युक्तिः—उच्चारणात् पूर्वमविद्यमानो वर्ण उच्चारणानन्तरमुत्पद्यते। संयोगश्चास्य निमित्तकारणम्। यथाऽऽह प्रशस्तपादभाष्ये—"तत्र वर्णलक्षणस्योत्पत्तिः—आत्ममनःसंयोगात् स्मृत्यपेक्षाद्वर्णोच्चारणेच्छा, तदनन्तरं प्रयत्नः, तमपेक्षमाणादात्मवायुसंयोगाद्वायौ कर्म जायते। स चोर्ध्वं गच्छन् कण्ठादीनभिहन्ति" (पृ. ३५६) इति।

प्रतियुक्तिस्तु—वर्णः सर्वदैव विद्यते। उच्चारणात् पूर्वमनभिव्यज्यमानः स उच्चारणात्परमभिव्यज्यते। संयोगस्तस्य व्यञ्जककारणं यथा सत एव घटस्यान्धकारवशादनभिव्यज्यमानस्य प्रकाशकः प्रदीपः।

(ii) युक्तिः—श्रवणानन्तरं पुनरनुपलभ्यमानो वर्णो नश्यत्येव। तथा च न्यायकुसुमाञ्जलिः—"न हि वर्णा एव तावन्नित्याः। तथाहि-इदानीं श्रुतपूर्वो गकारो नास्ति। निवृत्तः कोलाहल इति प्रत्यक्षेणैव शब्दध्वंसः प्रतीयते। न हि शब्द एवान्यत्र गतः, अमूर्तत्वात्। नाप्यावृतः

तत एव सम्बन्धविच्छेदानुपपत्तेः। नाप्यनवहितः श्रोता, अवधानेऽप्यनुपलब्धेः। नापि सहकार्यन्तराभावः, अन्वयव्यतिरेकवतस्तस्यासिद्धेः। नाप्यतीन्द्रियम्, तत्कल्पनायां प्रमाणाभावात्; अन्यथा घटादावपि तत्कल्पनाप्रसङ्गात्। न च शब्दस्य नित्यत्वसिद्धौ तत्कल्पनेति युक्तम्, निराकरिष्यमाणत्वात्—"(२/१स्थ) इति। पुनरुच्चार्यमाणस्तु भिन्न एव वर्णः।

प्रतियुक्तिस्तु—उच्चारणात् पूर्वं परं वा वर्णो नोपलभ्यत इति स नास्तीति वक्तुमसाम्प्रतम्; मुखोद्गतवायुसयोगविभागसत्त्वे तदभिव्यक्तिः, तदसत्त्वे तु नेति कल्पनायामदोषात्, पुनरुच्चार्यमाणस्य च स एव वर्ण इति प्रत्यभिज्ञानाच्च। तथा च शावरभाष्यम्—"अष्टकृत्वो गोशब्द उच्चारित इति वदन्ति। नाष्टौ गोशब्दा इति" (१/१/६/२० सूत्रस्थ) इति।

(iii) युक्तिः—शब्दं कुरु, मा शब्दं कार्षीः—इत्यादितः शब्दविशेषस्य वर्णस्य कार्यत्वेनानित्यत्वमवगम्यते।

प्रतियुक्तिस्तु—अत्र वर्णाभिव्यक्तिरेव निषिध्यते, न पुनर्वर्णसृष्टिः।

(iv) युक्तिः—बहूनां युगपदुच्चारणे महान् शब्दः श्रूयते। यतो ह्येकैकोच्चारणेन वर्णावयवप्रचयाद्वर्णो वर्धते। वृद्धिस्त्वनित्यत्वस्य लक्षणम्।

प्रतियुक्तिस्तु—वस्तुतो वर्णो न वर्द्धते। परन्तु स एव वर्णो नैरन्तर्येणानेकशो गृह्यमाणो महानिवावयववानिवोपलभ्यते।

(v) युक्तिः—सुधी+उपास्यः > सुध्युपास्यः—इत्यादौ इकारादिर्विकृतः सन् यकारादिर्भवति।

प्रतियुक्तिस्तु—तत्र वस्तुतो न विकृतिर्भवति। किन्त्विकारादौ प्रयोक्तव्ये यकारादिस्तत्स्थाने प्रयुज्यते।

(vi) युक्तिः—बहवो जना युगपन् ककारमुच्चारयितुं प्रभवन्तीति ककारस्य बहुत्वम्। तच्च वर्णस्यानित्यत्वापादके कार्यत्वे सत्येव सम्भवति।

प्रतियुक्तिस्तु—न ककारस्य बहुत्वम्। अत्र मीमांसासूत्रम्—"आदित्यवद् यौगपद्यम्" (१/१/६/१५) इति। यथैक एवादित्यो युगपद् बहुभिर्दृश्यते, तथैक एव ककारो युगपद् बहुभिरुच्चार्यत इति न दोषः।

(vii) युक्तिः—अन्धकारेऽपि 'अयं देवदत्तः कथयति, अयं यज्ञदत्तः कथयति' इत्युभयोः शब्दभेदात् प्रत्ययभेदो भवति। बहवश्च युगपदुदात्तादिभेदेन बहुविधमुकारमुच्चारयितुं प्रभवन्ति। तत्र बहुत्वे वर्णानां कार्यत्वमेव हेतुः। तेनानित्यत्वमापातितम्।

प्रतियुक्तिस्तु शाङ्करभाष्ये दत्ता। यथा—"ध्वनिकृतोऽयं प्रत्ययभेदो न तु वर्णकृत इत्यदोषः। कः पुनरयं ध्वनिर्नाम? यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति, प्रत्यासीदतश्च पटुमृदुत्वादि-भेदं वर्णेष्वासञ्जयति। तन्निबन्धनाश्चोदात्तादयो विशेषा न वर्णस्वरूप-निबन्धनाः। वर्णानां प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात्"। (१/३/२८—सूत्रस्थ) इति। अत्र ध्वनिशब्देन वैयाकरणाभिमतो वैकृतध्वनिरभिप्रेतः, यो द्रुतमध्यविलम्बितासु वृत्तिषु वर्णस्योच्चारणस्थानेषु चिराचिरस्थिति-सम्पादकः श्रवणेन्द्रिये चिराचिरग्रहणहेतुश्च; नतु प्राकृतध्वनिः।

वादिन आसु प्रतियुक्तिषु मौनं न भजन्ते। परन्त्वासां खण्डन-पूर्वकं स्वस्वसिद्धान्तं स्थापयन्ति। तावतैव न विरतिः। खण्डनस्य खण्डनं मण्डनमित्यादिपरम्पराऽनवस्थां जनयन्ती सृजति तत्त्वबोधे वैषम्यम्।

## अनित्यत्ववादः

(क) तत्र अनित्यत्ववादः प्रदर्शितो गौतमेन न्यायदर्शने—"आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराद्वा" (२/२/१४) इति शब्दा-नित्यताहेतुप्रदर्शकात् सूत्रादारभ्य २/२/५६ सूत्रपर्यन्तेन।

(ख) वैशेषिकदर्शने कणादश्च "अनित्यश्चायं कारणतः, लिङ्गाच्चानित्यः शब्दः" (२/२/२८,३२) इति सूत्राभ्यामनित्यत्ववादं प्रादर्शयत् ।

(ग) "महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिनिरोधधर्मेति चापरे" इति वात्स्यायनभाष्यम् (२/२/१३ सूत्रस्थ)। अयं बौद्धराद्धान्त इति तत्रत्या तात्पर्यटीका । एतन्मतेऽप्युत्पत्तिनिरोधधर्मत्वाच्छब्दस्यानित्यत्वमायाति ।

(घ) जैनदर्शनेऽपि पुद्गलपरमाणुभिर्विनाशोत्पत्तिविशिष्टस्य शब्दस्य घटितत्वकल्पनया शब्दस्यानित्यत्वं साधितम् । तथा च प्रमेयकमलमार्तण्डे—"यदस्माभिः श्रावणस्वभावविनाशोत्पत्तिमत् पुद्गलद्रव्यमित्यभिधीयते, तद् युष्माभिर्वर्ण इत्याख्यायते" (३/६६ सूत्रस्थ) इति ।

(ङ) शुक्लयजुःप्रातिशाख्येऽपि "वायुः खात्, शब्दस्तत्" (१/६, ७) इति सूत्राभ्यां वायुमेव शब्दमुक्त्वास्यानित्यत्वं प्रकटितम् । अस्य खण्डनं शाबरभाष्ये दृश्यते । यथा—"वायवीयश्चेच्छब्दो भवेत् वायोः सन्निवेशविशेषः स्यात् । न च वायवीयानवयवान् शब्दे सतः प्रत्यभिजानीमः । यथा पटस्य तन्तुमयान् । न चैवं भवति । स्याच्चेदेवं स्पर्शनेनोपलभेमहि । न च वायवीयानवयवान् शब्दगतान् स्पृशामः" (१/१/६/२२ सूत्रस्थ) इति ।

(च) "शब्दः प्रकृतिः सर्ववर्णानाम्, तस्य रूपान्यत्वे वर्णान्यत्वम् (२/१,२ सूत्र) इति तैत्तिरीयप्रातिशाख्यात् "शब्दो नाम ध्वनिः, वर्णानामकारादीनामुपादानकारणम्" इति तत्रत्यात् त्रिभाष्यरत्नविवरणाच्च ज्ञायते यच्छब्दोपादानेन वर्णो घटितो भवति । अस्मिन्नपि मते वर्णस्य कार्यत्वादनित्यत्वम् ।

**समीक्षा**—अत्र स्वीक्रियमाणं शब्दस्योपादानकारणत्वं विलक्षणमेवावश्यं स्वीकर्त्तव्यम् । सर्वत्र ह्युपादानकारणं क्वचित् कार्यात् पृथगपि वर्त्तते । यथा पटोपादानानि तन्तवः पटात् पृथगपि वर्तन्ते ।

अत्र तु वर्णोपादानरूपेण गृह्यमाणस्य शब्दस्य वर्णात् पृथक् सत्तैव नास्ति।

ध्वनिरिति कथ्यमानो वैकृतध्वनिर्लोके शब्द इति व्यवह्रियते। "अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः" (१/१/१) इति महाभाष्यं वाक्यपदीयस्य (१/११७स्थ) भावप्रदीपोद्धृता "वर्णाद्भिन्नोऽथ नादात्मा" इति कारिका चात्र प्रमाणम्। तादृशध्वनेरनित्यत्वादेव तन्मते शब्दोऽनित्यः, तेन तद्विशेषो वर्णोऽप्यनित्यः।

(ज) सांख्यमते सूक्ष्मस्थूलभेदेन द्विविधोऽपि शब्दोऽनित्यः। तथाहि—इन्द्रियविषयमतिवर्त्तमानमाकाशतन्मात्रमेव सूक्ष्मशब्दः। स चाहंकारस्य विकारत्वादनित्यः। इन्द्रियग्राह्यः स्थूलः शब्दोऽप्याकाशतन्मात्रस्य विकारत्वादनित्यः। तदुक्तं सांख्यकारिकायाम्—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" (१/२) इति

एतन्मते वैशिष्ट्यं तु—स्थूलः शब्दः स्वसृष्ट्यनन्तरं व्युत्क्रमेणाकाशतन्मात्रे विलयं यावदवतिष्ठते। तथावस्थितश्चोच्चारणप्रयत्नानन्तरमभिव्यज्यते, न तु सृज्यते।

अस्याभिव्यक्तिधर्मकत्वे प्रमाणं तु—"गन्धादिभिः सह संनिविष्टः शब्दो गन्धादिवदेवाभिव्यज्यते। तस्याभिव्यञ्जका भूतविशेषाभिघाताः" इति न्यायवार्त्तिकम् (१/१/२३ सूत्रस्थ)। यत्र सूक्ष्मशब्दस्याप्यनित्यता, तत्र का कथाकाशतन्मात्रजन्यस्य स्थूलशब्दस्य। तेन शब्दान्तर्गतो वर्णोऽनित्य एव भवति।

## नित्यत्ववादः

(क) वेदान्तशास्त्रे शाङ्करभाष्यं तु (१/३/२८ सूत्रस्थ) 'नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धम्' इत्युपसंजिहीर्षु

महताऽऽदरेण भगवत उपवर्षस्य 'वर्णा एव तु शब्दः' इत्युच्चार्यमाण-वर्णस्यैव नित्यत्वपक्षं प्राचीकटन्; "वर्णेभ्यश्चार्थप्रतीतेः सम्भवात् स्फोट-कल्पनाऽनर्थिका—" इत्यादिवाक्यैः स्फोटवाक्यमखण्डयच्च।

(ञ) पूर्वमीमांसायामपि वर्णानामनित्यत्वे युक्तीर्नित्यत्वे च प्रतियुक्तीः प्रदर्श्योपसंहारे नित्यत्वं साधितम्।

तत्र युक्तिसूत्राणि तावत्—"कर्मैके तत्र दर्शनात्, अस्थानात्, करोतिशब्दात्, सत्त्वान्तरे यौगपद्यात्, प्रकृतिविकृत्योश्च, वृद्धिश्च कर्तृभूम्नाऽस्य" (१/१/६/६-११) इति।

आसां युक्तीनां यथाक्रमं खण्डनपराणि प्रतियुक्तिसूत्राणि तु—"समं तु तत्र दर्शनम्, सतः परमदर्शनं विषयानागमात्, प्रयोगस्य परम्, आदित्यवद् यौगपद्यम्, वर्णान्तरमविकारः, नादवृद्धिपरा" (१/१/६/१२-१७) इति।

सिद्धान्ते नित्यत्वसाधकानि सूत्राणि खलु—"नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्, सर्वत्र यौगपद्यात्, संख्याभावात्, अनपेक्षत्वात्, प्रख्याभावाच्च योगस्य, लिङ्गदर्शनाच्च" (१/१/६/१८-२३) इति। एतन्मते—यथा महत्त्वमाकाशद्रव्यस्य गुणस्तच्च नित्यं तथा शब्दोऽप्याकाशद्रव्यस्य गुणः, स च नित्यः। अस्याभिव्यञ्जकाः संयोगविभागनादा इति।

(ट) शक्तिर्नित्येति यथा केषांचिद्दार्शनिकानामभिमतं तथाधुनिक-विज्ञानविदामपि। वैज्ञानिकरीत्या शब्दस्य शक्ति (energy) त्वात्तस्य नित्यत्वमवश्यं तैरङ्गीकरणीयम्। यत्तु, कदाचिच्छक्तेर्विनाश इवानुभूयते, तत्र वस्तुतो न विनाशः, परन्तु रूपान्तरीभाव एवेति बोध्यम्। आलोकशक्तेः शब्दशक्तिः, शब्दशक्तेर्गतिशक्तिः (kinetic energy *उद्भूतशक्तिः) इत्येवंरूपेण रूपान्तरप्राप्तिरेव तत्र भवति। यदा पुना-

* kinetic energy, potential energy इत्यनयोर्यथाक्रमं समानार्थक-संस्कृतशब्दौ—उद्भूतशक्तिरनुद्भूतशक्तिश्चेति साधीयान् प्रतिभाति।

रूपान्तरमात्रोऽपि न जायते, तदा स्थितिशक्ति (Potential energy अनुद्भूतशक्ति) रूपेणावस्थानमिति साम्प्रतिकविज्ञानसिद्धान्तः ।

## नित्यत्वानित्यत्ववादः

(ठ) व्याकरणे तु नित्यानित्यभेदेन द्विविधौ शब्दौ स्वीक्रियेते । "द्वौ शब्दात्मानौ, नित्यः कार्यश्च" (१/१/१) इति महाभाष्यमत्र प्रमाणम् । वैयाकरणाः खलु पदेषूच्चार्यमाणानामुच्चरितप्रध्वसित्वेनानित्यानां वर्णानां यौगपद्यविरहादर्थबोधप्रतिबन्धमाकलयन्तस्तैरनित्यैर्वर्णैरभिव्यक्तं स्फोटात्मक नित्यशब्दं स्वीकुर्वन्ति ।

(ड) तन्त्रशास्त्रं तावत् स्फोटं शब्दब्रह्मेत्यस्वीकुर्वदपि वैयाकरणवन्नित्यानित्यभेदेन शब्दद्वैविध्यमुररीकरोति । तथा च सारदातिलके—

"भिद्यमानात् पराद्बिन्दोरव्यक्तात्मा रवोऽभवत् ।
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः ॥
शब्दब्रह्मेति शब्दार्थं शब्दमित्यपरे जगुः ।
न हि तेषां तयोः सिद्धिर्जडत्वादुभयोरपि ।
चैतन्य सर्वभूतेषु शब्दब्रह्मेति मे मतिः॥"

(श्लो १/११-१३) इति ।

अत्र बिन्दोः स्पन्दाज्जायमानमव्यक्तं नादाख्यं चैतन्यतत्त्वमेव शब्दब्रह्मत्वेन निरूपितम् । शब्दब्रह्मण उत्पत्तिस्त्वाविर्भावार्थिका । अतस्तस्य नित्यत्वमप्रतिहतमेव । परमशिवस्य शक्तिः कुण्डलिनी नाम । चिन्मयी त्रिगुणा सा विश्वं स्वोदरे संहृत्य मूलाधारे स्वयम्भूलिङ्गेति व्यपदिश्यमानं नराख्यं बिन्दुं सार्धत्रिवलयाकारेण प्रतिवेष्ट्य मुखेन सुषुम्नारन्ध्रमाच्छाद्य च सुषुप्तभुजगाकृतिस्तिष्ठति । बिन्दोर्नादोत्पत्त्यनन्तरं तेन नादेन प्रबुद्धा बिन्दुना च मथिता सती सा कुण्डलिनी

"तदीया परमा शक्तिः सच्चिदानन्दलक्षणा ।
समस्तलोकनिर्माणसमवायस्वरूपिणी ।
तदिच्छयाऽभवत् साक्षात्तत्स्वरूपानुकारिणी"

इति भारतीयदर्शनग्रन्थ उद्धृतात् (पृ.६५१) सिद्धान्तशिखामणिवाक्यात् केवलं क्रियाशक्तिमय्यपि बिन्दोर्ज्ञानं नादादिच्छां च स्वात्मनि वहन्ती प्रपञ्चसृष्टिकाम्यया प्रवृत्तोच्चरितप्रध्वंसिनोऽनित्यान् शब्दब्रह्मणो भिन्नान् वर्णान् सृजति । तथा च तन्त्रशास्त्रे—

"या सा शक्तिः परा सूक्ष्मा निराचारेति कीर्त्तिता
हृद्बिन्दुं वेष्टयित्वाऽन्तः सुषुप्तभुजगाकृतिः ।
× × × ×
प्रबुद्धा सा निनादेन परेण ज्ञानरूपिणा
मथिता चोदरस्थेन बिन्दुना वरवर्णिनि ।
× × × ×
उत्थिता तु यदा तेन कला सूक्ष्मा तु कुण्डली"
(शिवसूत्र २/३स्थशिवसूत्रविमर्शिन्यामुद्धृतंमालिनीवार्त्तिकम् )

"इच्छाज्ञानक्रियात्मासौ तेजोरूपा गुणात्मिका ।
क्रमेणानेन सृजति कुण्डली वर्णमालिकाम् ॥"
(सारदातिलक श्लो. १/११२) इति

(ढ) सांख्यसिद्धान्तानुसारिणि प्रपञ्चसारतन्त्रे पुरुषसान्निध्यात् प्रकृतिर्बिन्दुस्फुटनोद्भव नादं श्रोत्रग्राह्यं कारयिष्यन्ती सृष्टिप्रपञ्चमिव वर्णप्रपञ्चं सृजतीत्यभिहितम् । यथा—

"वहुना किं परं पुंसः सान्निध्यात् प्रविजृम्भिता ।
प्रकृतिर्गुणभिन्ना सा त्रिदोषात्मा महीयसी ॥

पञ्चभूतमयी सप्तधातुभिन्ना च भौतिकैः ।
पञ्चभिश्च गुणैर्युक्ता पञ्चेन्द्रियविचारिणी ॥
पञ्चेन्द्रियार्थगा भूयः पञ्चबुद्धिप्रभाविनी ।
पञ्चकर्मेन्द्रियगता पञ्चत्वादाप्रवर्त्तते ॥

× × × ×

यदा स्वयं व्यञ्जयितुं यतेत महीयसी सा करणैः क्रमेण
तदा तु बिन्दुस्फुटनोद्भवस्य रवस्य सम्यक् प्रविजृम्भितं स्यात् ॥"
(१/९९-१०१/१०४) इति ।

(ण) अनित्यत्ववादिनां मतेऽपि (१) व्यक्तेर्विनाशेऽपि जातेर्विनाशाभावात्, (२) अनादिप्रवाहमये संसारे कासांचिद् व्यक्तीनां विनाशेऽप्यन्यासां व्यक्तीनामुत्पत्तिपरम्परायाः सद्भावेन तत्तत्पदार्थव्यवहारस्याविच्छिन्नत्वाच्च वर्णस्य नित्यत्वमवश्यं स्वीकर्त्तव्यम् । इयं नित्यता कूटस्थनित्यता न, परन्तु प्रवाहनित्यताऽपरपर्याया व्यवस्थानित्यता । यथाऽऽह भर्तृहरिः—

"नित्यत्वे कृतकत्वे वा तेषामादिर्न विद्यते ।
प्राणिनामिव सा चैषा व्यवस्थानित्यतोच्यते ॥"
(वाक्यपदीयम् १/१८) इति ।

इत्थं केचिद्वर्णस्योत्पत्तिं केचिच्चाभिव्यक्तिं शंसन्तो वर्णस्यानित्यत्वं नित्यत्वं वा साधयन्ति । तत्राप्युत्पत्त्यभिव्यक्त्योः स्थानं वागिन्द्रियं वा श्रवणेन्द्रियं वेति मतद्वैधं परिलक्ष्यते । एतच्च वर्णस्य श्रोत्रग्राह्यत्वविषये सजातीयविजातीयैर्मतैः प्रभावितमिति तदेवात्र विचार्यते ।

## ८। वागिन्द्रियहेतुकस्य वर्णस्य श्रवणेन्द्रियेण ग्रहणे विप्रतिपत्तयः

वर्णस्य श्रवण औचित्यं नोपपद्यते, वागिन्द्रियश्रवणेन्द्रिययोर्भिन्नदेशवृत्तित्वेन वागिन्द्रियहेतुकेन वर्णेन श्रवणेन्द्रियसामीप्यलाभस्य दुर्घट-

त्वात्—इमां शङ्कामुत्थाप्य न्यायवार्त्तिके युक्तयः प्रदर्शिताः। यथा—"न श्रोत्रं तावच्छब्ददेशमुपगच्छति, अमूर्तत्वात् । यदमूर्तं तन्निष्क्रियम्, यथा रूपादि। अमूर्तं चाकाशम्, तस्मान्निष्क्रियमिति। × × × × तस्मादक्रियावत्त्वान्नाकाशं गच्छति। शब्दोऽपि न गच्छति, निष्क्रियत्वादेव" (२/२/१४ सूत्रस्थ) इति।

एतस्याः शङ्कायाः समाधानं तत्तन्मतावलम्बिभिः स्वस्वसिद्धान्तस्वारस्येन प्रदर्शितम्। यथा—

(क) नैयायिका वदन्ति—यथा कदम्बपुष्पे युगपत् सर्वासु दिक्षु मुकुला उत्पद्यन्ते, तथा संयोगविभागोत्पन्नादेवस्माच्छब्दात्सर्वदिग्व्यापिनी शब्दावलिर्वलयाकारेण जायते। ततोऽन्या शब्दावलिस्ततोऽप्यन्येति क्रमेण जायमाना शब्दपरम्परा क्रमशो मन्दतरीभूय वायुना स्वस्वदिगभिमुख प्रसरति । यदा केनापि प्रतिबन्धकेन वायोर्गतिर्व्याहन्यते, तदा शब्दानां प्रसरणं समाप्यते । एव कर्णशष्कुलीप्रदेशे प्रविष्टानां बहूनां शब्दानां मध्यात् पटीयानेव गृह्यते, मन्दाश्च पटीयसाऽभिभूता नैव ग्रहीतुं शक्यन्ते। इत्थं शब्दजः शब्द एषां मते श्रवणमर्हति। तथा च कणादसूत्रविवृतौ—"केषांचिन्मते कदम्बगोलकन्यायात् शब्दोत्पत्तिः । तथाहि—आदिशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते, ततश्चान्ये दश शब्दा उत्पद्यन्ते" (पृ. ४५८) इति । न्यायवार्त्तिकेऽप्युक्तम्—"परिशेषात्तु सन्तानसिद्धिः। तत्राद्यः शब्दः संयोगविभागहेतुकः । तस्माच्छब्दान्तराणि कदम्बगोलकन्यायेन सर्वदिक्कानि, तेभ्यः प्रत्येकमेकैकः शब्दो मन्दतरतमादिन्यायेनाश्रयाप्रतिबन्धमनुविधीयमानः प्रादुरस्ति । ततोऽन्त्यस्यातिमान्द्याच्छब्दान्तरोत्पत्तिशक्तिविघातो येन केनचित् प्रतिबन्धाद् भवतीति। अतः शब्दसन्तानोच्छेदः । तत्र यः कर्णशष्कुलीमन्तमाकाशदेश प्राप्नोति, स उपलभ्यते, नेतरः। × × × तेषां च भिन्नानां समानदेशत्वे सति ये कर्णशष्कुलीमत्याकाशदेशे समवयन्ति, तत्र यः पटुः शब्दः स

इतरस्याभिभावक इति" (२/२/१४ सूत्रस्थ)। अत्र शब्दपदेन वर्णोऽपि परामृश्यते।

(ख) वैशेषिकाणां नये तु—यथा महत्या वीच्याः क्षुद्रास्तरङ्गा जायन्ते, क्षुद्रेभ्यः क्षुद्रतराः, तेभ्योऽपि क्षुद्रतमाः—अनेन क्रमेण वेला-भूमिपर्यन्तं तरङ्गा गच्छन्ति, तथा संयोगविभागोत्पन्नाच्छब्दात् सर्वदिक्षु वलयाकृत्या परिव्याप्तैका शब्दधारा जायते। तस्याः क्षुद्रतरा, क्षुद्रतरायाश्च क्षुद्रतमा-इत्येवक्रमेण कर्णपर्यन्तं जायमानाः शब्दाः कर्णविवरे श्रूयमाणं शब्दमुत्पाद्य विनश्यन्ति। तथा च कणादसूत्रविवृतिः —"शब्दस्तु श्रोत्रोत्पन्नो गृह्यते श्रवणेन्द्रियेण। तदुत्पत्तिस्तु वीचीतरङ्ग-न्यायेन भवति। तथा हि आद्यशब्दस्य वहिर्दशदिगवच्छिन्नोऽन्यः शब्द-स्तेन शब्देन जन्यते। तेन चापरस्तद्व्यापकः, एवक्रमेण श्रोत्रोत्पन्नो गृह्यत इति।" (पृ. ४५८)। इयं प्रक्रिया वर्णतदितरशब्दसाधारणा।

शब्दोत्पत्तिवादिनामेतन्मतद्वयं विरुद्धयुक्तिभिः कवलितम्। यथा—शब्दजः शब्दः श्रूयेत चेत्तर्हीमा विप्रतिपत्तयो भवेयुः।—

(i) 'वीणाशब्दः श्रूयते' इत्यस्य स्थाने 'वीणाशब्दजशब्दः श्रूयते' इत्यप्रसिद्धव्यवहारापत्तिः।

(ii) शब्दयोर्मध्येऽसंगतकार्यकारणभावकल्पनापत्तिः।

(iii) शब्देन सर्वतोदिक्कबहुशब्दसृष्टौ मानाभावो गौरवं च।

(iv) शब्दजनकशब्दानां वेगक्षयाभावाद् विरतेरनुपपन्नता।

(v) सर्वगतस्याकाशस्य कुड्यादावपि सत्त्वेन तद्व्यवधानेन शब्दाग्रहणकल्पनाया असमीचीनता।

(vi) शब्देन शब्दान्तरसृष्टौ तुल्यायां तीव्रशब्देन मन्दशब्दो-त्पत्तेरसाध्यत्वम्।

(vii) मूर्त्तिमत्त्व—क्रियायोग-वेगादिरहितानां शब्दानामेतत्त्रय-विशिष्टेन वीचीसन्तानेन सादृश्यानुपपत्तिः।

(ग) "अप्राप्त एव शब्दः श्रोत्रशक्त्या गृह्यते" इति न्यायमञ्जर्यां (आ. ३, पृ. २१६) जयन्तभट्टो बौद्धमतमुददीधरत्। इदं वर्णपक्षेऽपि प्रयोज्यम्। शब्दश्रोत्रयोर्गत्यभावाज्जायमाने श्रवणोपपत्त्यन्तराये बौद्ध-सिद्धान्ते महता कौशलेन दूरीकृतेऽपि श्रोत्रस्याप्राप्तशब्दग्राहकत्व-कल्पनायां प्रामाण्यं दुरुपपादं प्रतिभाति।

(घ) जैनमते—"शब्दः स्वोत्पत्तिस्थानात् प्रविशति कर्णरन्ध्रम्" इति ध्रुवपदाधृतः प्रमाणनयतत्त्वालंकारः (पृ. ४३)। एतन्मते शब्दः खलु पुद्गलपरमाणुघटितस्तेन वर्णोऽपि तथा। तस्य कर्णदेशगमनविरो-धिन्यः सोपहासा युक्तयस्तु—

(i) "कृशश्च गच्छन् स कथं न विक्षिप्येत मारुतैः ?
(ii) दलशो वा न भज्येत वृक्षाद्यभिहतः कथम् ?
(iii) प्रयाणकावधिः कश्च गच्छतोऽस्य तपस्विनः ?
(iv) एकश्रोत्रप्रविष्टो वा स श्रूयेतापरैः कथम् ?
(v) निष्क्रम्य कर्णादेकस्मात् प्रवेशः श्रवणान्तरे।
यदीष्येत, कथं तस्य युगपद् बहुभिः श्रुतिः ?
(vi) श्रोतृसंख्यानुसारेण न नानावर्णसम्भवः।
वक्तुस्तुल्यप्रयत्नत्वाच्छ्रोतृभेदे तदत्यये॥"

(न्यायमञ्जरी—प्रमाणप्रकरणम् पृ. १६८) इति

वस्तुतो मूर्तानां पृथिव्यप्तेजोवायूनामेव परमाणुघटितत्वं सं-गच्छते न त्वमूर्ताकाशीयस्य शब्दस्य मूर्त्तिमता शब्दपरमाणुना घटित-त्वमित्येतन्मत दुर्बलतरमित्यनुमातुं शक्यम्।

(ङ) अधुनातने पदार्थविज्ञाने वैशेषिकसिद्धान्तवदुत्पत्तिवादे गृहीतेऽपि बीचीतरङ्गन्याये चावलम्बितेऽपि वायोरेव श्रोत्रप्रवेशः स्वीकृतो

न तु शब्दस्य। वायुतरङ्गैः कर्णपटहस्य कम्पने सति शब्दाकारामुद्भूतशक्तिं प्रत्याययन्ति शब्दग्राहिणो मस्तिष्कगामिनः स्नायव इति तत्रत्यं विवेचनम्।

तत्र शब्दस्योत्पत्तिनिरूपणगर्भा ग्रहणप्रक्रिया वर्णिता। कस्मिंश्चिद् द्रव्य आहते तद्घटकाः सर्वेऽपि कणा आघातानुसारं कियत्परिमाणेनान्दोलिता भवन्ति, कम्पन्त इति यावत्। आन्दोलनं नाम द्रव्यकणानां स्वास्थितिस्थानादुभयोः पार्श्वयोः पर्यायेण प्रायः समानदूरं गत्वा पुनस्तत्स्थानप्राप्तिः। आन्दोल्यमाना द्रव्यकणा निकटवर्त्तिनो वायुकणानाघ्नन्ति। तेन वायुकणा अप्यान्दोलिता भवन्ति। ते वायुकणा निकटवर्त्तिनः स्तिमितानन्यान् वायुकणानाघ्नन्ति, ते च निकटवर्त्तिनोऽपरानित्यादिक्रमेणाघातपूर्वकेषु वायवीयान्दोलनेषु तरङ्गवद् बहुत्वक्रमविस्तारावापन्नेषु तेषां केचिदंशाः कर्णरन्ध्रप्रवेशं लभन्ते, येन श्रवणानुभूतिः सम्पद्यत इति।

वायुतरङ्गाणां कर्णप्रवेशोत्तरं जायमाना प्रक्रिया Acoustics ग्रन्थे निरूपिता[10]। सा चेत्थम्—(आभिघातानन्तरभाविषु) निपीडनोत्थेषु वायुतरङ्गेषु कर्णपटहं (tympanic membrane) प्रविष्टेषु स कम्पते। इदं बाह्यकर्णस्य कम्पनमाचक्षते। कर्णाभ्यन्तरे मध्यमकर्ण आभ्यन्तरकर्णश्च विद्येते। शसितं कम्पनं तरङ्गगतिमाधाय मध्यमकर्णस्यास्थित्रयमार्गेणान्तः प्रविशति। तेन मध्यमकर्णस्याभ्यन्तरभागस्थ-

10. "When a compression-wave arrives at the tympanic membrane it sets it in vibration, which vibration is transmitted onwards by the three small bones. Thus the phonestra ovalis is set in vibration and the waves travel through the lymph round the very complex path in the internal ear, so stimulating the nerve-fibres and producing the sensation which the brain records as sound' (chap. 1, p. 22)

मावरणं (Phonestra ovalis) कम्पते। ते च तरङ्गा जटिलेनाभ्यन्तर-कर्णवर्त्तिना द्रवद्रव्य(Lymph)—मार्गेण गतिं कुर्वन्ति, येन स्नायुतन्तव उद्वेजिता मस्तिष्के कमप्यनुभवं सृजन्ति । स चानुभवः शब्दात्मकतया विविच्यत इति। अतो वर्णस्तादृशानुभव इति फलितम्। इमानि खलु मतान्युत्पत्तिवादसिद्धान्तमनुसृत्य प्रवृत्तानि । अथाभिव्यक्तिवादः।

(च) तत्र सांख्यमते—श्रोत्रवृत्तिः शब्ददेशं गच्छति; शब्दस्तां विकुर्वन्नेव तथा गृह्यते। यथोक्तं तात्पर्यटीकायाम्—"पञ्चतन्मात्रोत्पन्न-भूतसूक्ष्मसमुदायारब्धपृथिव्यादिविकारो गोघटादिवृत्तिः शब्दो योग्यदेशस्थ आहङ्कारिकतया व्यापकं विषयदेशस्थं श्रोत्रेन्द्रियं विकुर्वन्नवस्थित एव गृह्यते" (२/२/१२ सूत्रस्थ) इति। अतो वर्णस्यापि शब्ददेशगमनमायाति।

(छ) वेदान्तिनां शब्दग्रहणविषयकं मतं यथा वेदान्तपरिभाषा-याम्—"चक्षुःश्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः; श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भेर्यादिदेशगमनसम्भवात्" (२४) इति। इदं वर्णाख्यशब्दपक्षेऽपि समानम्।

अभिव्यक्तिवादे वागिन्द्रियादौ विषयदेशे यदा शब्दोऽभिव्यज्यते, न तूत्पद्यते, तदा तस्य क्रियाहीनस्य गतिर्नैव भवितुमर्हति। अत एव विषयदेशं प्रति श्रवणेन्द्रियस्य गतिं प्रकल्प्य शब्दस्य श्रवणानुभूतिर्वेदान्त-सांख्यमते साधिता । एतन्मतानुसारं श्रोत्रेन्द्रियस्य शक्तिर्न केवलं कर्णशष्कुलीसीमामध्ये व्यापारवती तथा नैयायिकवैशेषिकमतानुसारम्, अपि तु विषयदेशमपि व्याप्नोति यथा चक्षुःप्रभा दूरवर्त्तिनि घटे सयुक्ता घटस्य चाक्षुषप्रत्यक्षमादधाति तद्वत् । एवमितरशब्दानिव वर्णानपि गृह्णाति विषयदेशजा शब्दशक्तिः।

(ज) वैयाकरणसिद्धान्ते तु शब्दश्रवणेन्द्रिययोराकाशदेशत्वाद् वागिन्द्रियाकाशश्रवणेन्द्रियाकाशयोर्वस्तुतोऽभिन्नत्वाच्च शब्दश्रोत्रयोर्गत्यभावेऽपि शब्दग्रहणे न किमप्यसौकर्यं भवति। तथा चोद्द्योतः—"किं श्रोत्रस्य विषयदेशगमनात् सम्बन्धः, उत शब्दस्य श्रोत्रदेशगमनात्। नोभयम्। × × उभयोरपि गमनाभावे हेतुर्निष्क्रियत्वम्। × × × आकाशदेशत्वे च तद्वदेव तस्यापि व्यापकत्वेन श्रोत्रदेशेऽभिव्यक्तस्य तेन ग्रहः" (महाभाष्यम् १/१/२ मा. सू. १ स्थ) इति। अनेन वर्णस्य गत्यभावः सिध्यति।

अभिव्यक्तिः सर्वदा न भवति। सा खलु कादाचित्की। तदर्थं केनापि कारणेन भाव्यम्। तच्च संयोगविभागावित्युच्यते। ताल्वादिषु जिह्वादीनां संयोगविभागयोः सतोर्वर्णोऽभिव्यज्यते, तद्विरतौ च नाभिव्यज्यते। एवमन्येऽपि ध्वन्यात्मकाः शब्दाः। अत्रापि विप्रतिपत्तयः। यथा—

(i) काष्ठच्छेदने कुठारकाष्ठसंयोगविरत्यनन्तरं दूरे शब्दश्रवणं भवत्येव।

(ii) उत्पत्तिपक्षे यावद्दूरं वायुना शब्दो नीयते तावद्दूरमेव श्रवणमिति मगध उच्चारितः शब्दः कुरुक्षेत्रे नोपलभ्यते। अभिव्यक्तिवादे पुनः श्रोत्रस्याकाशरूपत्वपक्षेऽकारस्यैकत्वादेकत्र वर्णाभिव्यक्तौ यावदाकाशं वर्णश्रवणप्रसङ्गः।

(iii) किं चैकस्यैव घटस्य प्रकाशनाय नीतो दीपो यथा पटमपि दर्शयति, तथैकस्य वर्णस्योच्चारणार्थं प्रयत्ने कृते युगपदेवापरेऽपि वर्णा अभिव्यज्येरन्।

(iv) अपि चाभिव्यङ्ग्यो वर्णः खलु निरवयवः। तेन संयोगविभागाभ्यां तस्यावयवसंस्कारो नोपपद्यते। श्रोत्रसंस्कारपक्षाश्रयेऽपि

न निस्तारः, श्रोत्रपदेनाकाशस्य परामर्शात् , तस्याप्यनवयवत्वात् । इत्थमेकतरस्यापि संस्कारायोग्यत्वात्तृतीय उभयसंस्कारपक्षोऽपि निरस्तः।

(v) श्रोत्रेन्द्रियस्य विषयदेशगमनकथनं च प्रौढिवादमात्रम्, तादृशकल्पने मानाभावात् ।

एतासां विप्रतिपत्तीनां खण्डनमण्डनानि ग्रन्थेषु विलोक्यन्ते ।

(क) मीमांसायामभिव्यक्तिवादं स्वीकृत्यापि शब्दग्रहण उपायान्तरमवलम्बितम्, तदनुसार कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रम् । तन्मते शब्दोऽभिव्यज्यत इति सत्यम्, परन्तु न वागिन्द्रिये । वागिन्द्रिये तु तदभिघातेन प्रेरिता वायवो मध्ये विद्यमानान् स्थिरान् वायूनाघ्नन्तः सर्वतोदिक्कान् वायुसयोगविभागान् सृजन्तस्तत्तत्कर्णेषु शब्दश्रवणयोग्यसस्कारं सपादयन्तः शब्दमुपलम्भयन्ति । इत्थमन्ततो गत्वा श्रोत्रे वायुसंयोगविभागावेव वर्णस्य साक्षात्कारणम्, न तु ताल्वादौ संयोगविभागौ। तौ श्रोत्र उत्पद्यमानयोर्वायुसंयोगविभागयोः कारणमिति त्वन्यत् । अत्र शाबरभाष्यं प्रमाणम् । यथा—"अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्ते । ते च वायोरप्रत्यक्षत्वात्संयोगविभागा नोपलभ्यन्ते। अनुपरतेष्वेव तेषु शब्द उपलभ्यते, नोपरतेषु । अतो न दोषः । अत एव चानुवातं दूरादुपलभ्यते शब्दः" (१/१/६/१३ सूत्रस्थ) इति ।

मतमिदं मतान्तरेभ्यो विलक्षणम् । मतान्तरेषु "वर्णस्थानं वागिन्द्रिय"मिति प्रतिपादयत्स्वनेन मतेन तत्स्थानं श्रोत्रेन्द्रियमिति प्रतिपाद्यते । शब्दो नैव गच्छति कर्णम्, अपि तु निपीडिता वायवः— इत्यप्यस्य मतस्य वैशिष्ट्यम् । अत्राधुनिकविज्ञानसंवादोऽप्यस्ति ।

## ६। वर्णपदार्थः

एतावत्पर्यन्तं दर्शितेषु मतेषु वर्णविषये विप्रतिपत्तयः परिलक्षिताः। तदनुसारं वर्णपदार्थग्रहणे विपश्चितां मतानैक्यं स्वाभाविकमेव। तदत्र संक्षेपेण प्रदर्श्यते।

(क) केचिद्वर्णं सूक्ष्ममाकाशद्रव्यं मन्यन्ते। तथा च वीरराघवाचार्यधृता श्रीमद्भागवतस्य भागवतचन्द्रचन्द्रिका टीका—

"शब्दो वर्णात्मको नित्यो ध्वनिराकाशसम्भवः।
आकाश एव सूक्ष्मस्तु ध्वनिरित्येव शब्द्यते।
स एव व्यज्यमानस्तु भवेत्कर्णैकगोचरः॥"
(३/२६/३३ श्लोकस्थ) इति।

अयं सांख्यमतस्यानुवादः। अत्र वर्णस्याकाशसम्भवत्वेऽपि नित्यत्वोक्तिराकाशादुत्पत्तिसमयमारभ्याकाशे विलयपर्यन्तमित्यापेक्षिकाधिकसमयस्थित्योपचरिता।

(ख) वैयाकरणमते व्यक्तो वर्णः शब्दाख्यं द्रव्यम्। अव्यक्तस्तु वर्णः स्फोटरूपो ब्रह्म। एतत् साधितं परमलघुमञ्जूषायाम् "शब्दब्रह्मरूपस्फोटव्यञ्जकश्च। × × स च × × वर्णरूपः × ×" (पृ२७) इत्यादिना। विश्वमस्य शब्दब्रह्मणो विवर्त्त इति भर्तृहरिः। यथा—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः"
(वाक्यपदीय १/१) इति।

ज्ञानं शब्दरूपं धत्त इति महाभाष्ये प्रतिपादितम्। उपाध्यायादधीत इत्यत्रोपाध्यायादध्ययनमपक्रामतीति (१/४/२६ सूत्रस्थ) महाभाष्याशयं

विवृण्वानः कैयट उपाध्यायगतं ज्ञानं वाग्रूपेणाविर्भवतीति मत्वा "ज्ञानस्य शब्दरूपतापत्तिरिति दर्शनमत्रभाष्यकारस्य" इत्यवोचत् ।

चतुष्टयी शब्दानां प्रवृत्तिरिति वदतां वैयाकरणानां मतेऽपि स्फोटशब्दो जात्यालिङ्गितं द्रव्यं सिध्यति, ध्वन्याख्यशब्दगुणाश्रयत्वात् । एतच्च सूचितम् "एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः" (१/१/७० सूत्रस्थ) इति महाभाष्यात् ।

(ग) तन्त्रमते चैतन्यरूपोऽव्यक्तो नादः शब्दब्रह्म । उच्चार्यमाणो वर्णस्तु शब्दाख्यं द्रव्यम् ।

(घ) जैनमते वर्णः पुद्गलपरमाणुघटितं द्रव्यम् ।

(ङ) शुक्लयजुःप्रातिशाख्यमते शब्दो वायुद्रव्यम् । तेन शब्दाभिन्नो वर्णोऽपि ।

(च) तैत्तिरीयप्रातिशाख्यमते—उपादानकारणेन शब्देन घटितत्वाद्वर्णो द्रव्यम् ।

(छ) वैशेषिकैः शब्दस्य गुणत्वं ध्वनिवर्णभेदेन प्रकारद्वयं चाख्याय प्रतिप्रकारं तादात्म्यसम्बन्धः स्वीकृतः । यथा—"श्रोत्रग्राह्यो गुणः शब्दः, स द्विविधः, ध्वन्यात्मको वर्णात्मकश्च" (पृ. ३०) इति तर्कसंग्रहेऽन्नम्भट्टः । एकस्य शब्दप्रकारस्य वर्णेन, अन्यस्य च प्रकारस्य ध्वनिना तादात्म्यसम्बन्धकथनाच्छब्दवर्णयोः सामान्यविशेषभावः सिध्यति । तेन वर्णो गुणाख्यः पदार्थः ।

(ज) नैयायिकमतेऽपि शब्द आकाशस्य गुणाख्यः पदार्थः, शब्दविशेषो वर्णोऽपि तथा ।

(झ) वैज्ञानिकनये—शब्दो नाम कर्णं स्पृष्ट्वा कर्णान्मस्तिष्कं नीता प्रत्यक्ष—(perception) जनिकेन्द्रियानुभूति (sensation) दायिन्युद्भूतशक्तिः (kinetic energy) इति।

(ञ) बौद्धमतेऽपोहापरपर्यायमन्यानिवर्तनं शब्दस्य तत्त्वम्। तेन वर्णो नाम वर्णाभावाभाव इत्यर्थः। तथा च वाक्यपदीयस्य भावप्रदीपटीकागतमुद्धरणम्—

"त्रिगुणः पौद्गलो वायमाकाशस्याथवा गुणः
वर्णादन्योऽथ नादात्मा वायुरूपोऽर्थवाचकः।
पदवाक्यात्मकः स्फोटः सारूप्यान्यानिवर्त्तने"
(१/११२स्थ) इति।

(ट) लोके त्वेतत्कारिकाप्रामाण्यात् "अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते" (१/१/१ सूत्रस्थ) इति महाभाष्यप्रामाण्याच्च नादाख्यो वैकृतध्वनिरेव शब्द इति व्यवह्रियत इति ज्ञेयम्।

(ठ) सांख्यमते खलु वर्णः परम्परया प्रकृतिविकारभूतस्याकाशतन्मात्रस्य विकारो द्रव्यम्।

(ड) अद्वैतवेदान्तमते ब्रह्मभिन्नस्य वर्णस्य व्यावहारिकत्वम्, ब्रह्माभिन्नस्य वर्णस्य तु पारमार्थिकत्वम्।

(ढ) मीमांसकमते नित्यः कदाचिदभिव्यज्यमानो वर्णो द्रव्यम्।

**समीक्षा**—एषु सर्वेषु मतेषु विचार्यमाणेषु वर्णः केनचिद्रूपेण नित्यस्तिष्ठतीति मतं साधु प्रतिभाति। श्रूयमाणो वर्णस्तस्य भ्रमोऽस्तु, परिणामोऽस्तु, इन्द्रियग्राह्यं रूपमस्तु, उद्भूता शक्तिरस्तु, अभिव्यङ्ग्यं

स्वरूपमस्तु, अन्यद् यत् किमपि वा स्वस्वसिद्धान्तानुसारमस्तु, न तत्रेदमित्थमेवेत्यवधारणा कर्त्तुं पार्यते; सपक्षे विपक्षे च युक्तिपटलसद्भावात्। कर्णप्रविष्टवायुतरङ्गेण कर्णपटहकम्पने सत्यनुद्भूता शक्तिरुद्भूतशक्तीभूय शाब्दप्रत्यक्षं सम्पादयतीति मीमांसकवैज्ञानिकयोः सिद्धान्तो हृदयग्राही प्रतिभाति। गतिहीनयोर्व्याप्ययोरितरपदार्थसाधारणयोश्च शब्दश्रोत्रयोर्गमनस्य व्यापकत्वस्यासाधारणशक्तेश्च कल्पनाया साहसिकत्वभूयिष्ठत्वात्।

---

# द्वितीयः परिच्छेदः

## वर्णोद्गमप्रकारः

### १०। वर्णसंबद्धाश्चतस्रो वाचः

"स्रोतोमार्गस्याविभक्तत्वहेतोस्तत्रार्णानां जायते न प्रकाशः।
तावद् यावत्कण्ठमूर्धादिभेदो वर्णव्यक्तिः स्थानसंख्या यतोऽतः"
(प्रपञ्चसारतन्त्र श्लो २/४४) इति

उक्तिरियं बोधयति यत्-ऊर्ध्वगामी शरीरस्थो वायुरेकेनैव स्रोतोमार्गेण प्रवहन्नेकरूपेणैव तिष्ठति। तदानीं न कोऽपि वर्णः प्रकाशमधिगच्छति। परस्तात् कण्ठमूर्धादिषूच्चारणस्थानेषु वायोरभिघातानन्तरमेव वर्णाभिव्यक्तिर्भवतीति।

शरीरस्थ कस्मात् स्थानान्निर्गत्य वायुर्वर्णोत्पत्तिं सम्पादयतीति प्रश्ने—फुफ्फुसादिति वदन्त आधुनिकभाषातत्त्वज्ञाः फुफ्फुसात्पूर्वं वायुव्यापारविषये मौनं भजन्ते। नागेशप्रमुखा विद्वांसस्तु कण्ठचक्रे स्थितायाः वैखरीवाचः पूर्ववर्त्तिनी या हृदयचक्रस्था फुफ्फुसस्थाना मध्यमा वाग् विद्यते. ततः पूर्वं नाभिचक्रे पश्यन्तीनाम्नीं तत्पूर्वं च मूलाधारचक्रे परानाम्नीं वाचमवस्थितां शंसन्तो मूलाधारचक्रादेव वायुव्यापारमाचक्षते। यद्यपि पृष्ठवर्त्तिनि मेरुदण्डे सुषुम्नानाडी वर्तते, तत्र च इडापिङ्गलानाड्योर्मेलनस्थानान्येव चक्राणि, तथापि पायुहृदयादितत्तत्स्थानसंनिधौ स्थितानि चतुर्विधानां वाचामभिव्यक्तिकेन्द्राणि तानि चक्राणि सूक्ष्मभावेन तत्तत्स्थानैः सह संबद्धानीति तन्त्रशास्त्रपरिशीलनादनुमीयते, अन्यथा—

"प्रेरिता मरुता नित्यं सुषुम्नारन्ध्रनिर्गताः
कण्ठादिकरणैर्वर्णाः क्रमादाविर्भवन्ति ते" (२/१, २)

इति सारदातिलकोक्तप्रकारेण वर्णानां सुषुम्नारन्ध्रनिर्गतत्वं न संगच्छेत।

तत्र परायाः स्वरूपं नागेशेनोक्तं परमलघुमञ्जूषायाम्—"मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते" (स्फोटनिरूपण) इति। सिद्धान्तलघुमञ्जूषायामेतद्वैशद्येन विवेचितम्। तदनुसारं परा शब्दार्थोभयमयी। तत्र सर्वे शब्दाः सर्वे चार्था अविभक्ताः सूक्ष्मरूपेण सन्ति। तत्र च यस्य कस्यापि शब्दस्य येन केनाप्यर्थेन संबन्धः कर्तुं शक्यते योगिभिः।

"सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम्।
तामन्ये विदुरन्यामिव च नामरूपामात्मनि सन्निविष्टाम्"

इति श्रुतिमुद्धरंस्तत्र नागेशो वक्ति यत् "सर्वैरर्थैः सर्वशब्दानां सम्बन्धश्च योगिगम्य एव, तेषां योगबलेनोभयरूपपराप्रत्यक्षात्" (शक्तिनिरूपण) इति।

इमौ वागर्थौ सितशोणबिन्दुरूपेण परस्परमध्ये प्रतिबिम्बिताभ्यां सामरस्येन नीरन्ध्रपरीरम्भेण विहरणपरायणाभ्यां शिवशक्तिभ्यां सृष्टाविति कामकलाविलासतन्त्रम्। यथा—

"सितशोणबिन्दुयुगलं विविक्तशिवशक्ति संकुचत्प्रसरम्।
वागर्थसृष्टिहेतुः परस्परानुप्रविष्टविस्पष्टम्" (श्लो. ६) इति।

एतदेव शिवशक्तियुगलमहंतत्त्वघटकयोः अ-हवर्णयो रूपेणाविर्भूतमेतद्वर्णद्वयान्तर्गर्भितं सकलं नामघटकवर्णसमूहं यथा प्रकाशयति, तथा नामिमयं सकलमर्थजातं प्रकाशयतीति सृष्टितत्त्वमपि तत्र प्रकाशितमनेन श्लोकेन—

"चित्तमयोऽहंकारः प्रव्यक्ताह्लार्णसमरसाकारः।
शिवशक्तिमिथुनपिण्डः कवलीकृतभुवनमण्डलो जयति"
(श्लो ७) इति।

कालिदासश्च वागर्थाविव नित्यमर्धनारीश्वररूपेण संपृक्तौ वागर्थमयस्य विश्वस्य जनकौ पार्वतीपरमेश्वरौ वागर्थप्रतिपत्तये ववन्दे रघुवंशे मङ्गलाचरणश्लोके। यथा—

"वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ" (१/१) इति।

इत्थ मूलाधारादेव वायौ सुषुम्नाया विभिन्नचक्रमार्गेणोर्ध्वं प्रवहत्यपि मूलाधारे तस्य प्रवाहात्मिका गतिर्न विद्यते। उच्चारणार्थं प्रवृत्तौ जातायामेवायं वायुरव्यक्तवाग्रूपया परया सह संपर्कशीलो भवति। तस्मात्तत्र वाचः प्रथमाभिव्यक्तिर्भवति।

परावाचा सम्बद्धो वायुस्तस्मान्मूलस्थानादूर्ध्वं प्रसरन्नाभिकेन्द्रे पश्यन्तीमुद्बोधयति। इयं वाक् स्पन्दवती, न तु परावन्निष्पन्दा शान्ता वा। तत्र परापेक्षयाऽधिका वाचोऽभिव्यक्तिर्भवति। मनोमार्गमतिक्रान्ता परा निर्विकल्पकज्ञानेन परिनिष्ठितयोगिभिः प्रत्यक्षीक्रियते, मनोगोचरीभूतेयं त्विदमित्थमिति प्रकारताविशिष्टेन सविकल्पकज्ञानेनापरिपक्वयोगिभिरपीति विशेषः। अतएव नागेशेनोक्तम्—"एतद्द्वयं वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते" (परमलघुमञ्जूषा, स्फोटविचार)।

तन्त्रमते परा-पश्यन्ती-मध्यमा-वैखर्यो न पृथक् तत्त्वानि। बिन्दुनामकं मूलतत्त्वमेव तत्तत्स्थानेषु तत्तदाख्यां धत्ते। अत एव "असावेव बिन्दुः स्थानान्तरगतः पराद्याख्यो भवति" (१/१/१२ श्लोकस्थ) इति पदार्थादर्शव्याख्यायामुक्तम्।

शान्ता (=क्रियाहीना) निरञ्जना (=गुणधर्मरहिता) परा वागित्युच्यमानं मूलाधारवर्त्ति बिन्दुतत्त्वं मूलाधारादुत्थितं नाभिमण्डले दृष्टिदृश्यभावमापन्न पश्यन्तीवाग्रूपेण नामितं भवतीति तान्त्रिकाः। तथा चाहिर्बुध्न्यसंहिता—

"मूलाधारात्समुद्यन्ती सा शान्ता सा निरञ्जना।
दृष्टिदृश्यात्मतां प्राप्य शब्दार्थत्वविवर्तिनी॥
पश्यन्ती नाम नाभौ सा योगदृश्योदयं गता"

(१६/५७, ५८) इति।

यदा तु वायुस्ततोऽप्यूर्ध्वं हृत्प्रदेशं गच्छति, तत्र चानाहतचक्रं वाचमधिकतरमुन्मेषयति, तदा मध्यमा वाक् परिस्फुरति। एतत्पूर्वं नादो नासीत्, उच्चारणक्रियाऽपि नासीत्। अस्यां तु नादस्य सूत्रपातो भवति, सूक्ष्मोच्चारणक्रिया च जायते। परा-पश्यन्तीवदस्याः परश्रोत्रग्राह्यत्वाभावेऽप्युच्चारयिता स्वश्रोत्रे पिधायास्याः स्वरूपं यत्किञ्चिद्भावेनानुभवति। पश्यन्तीवाचो दृष्टिदृश्यावस्थापेक्षयाऽत्रत्यावस्था किञ्चिद्विकसिता नवीनतया वाच्यवाचकभावं योगमन्तराऽप्युपलभ्यमान धत्ते। उपांशुजपेऽस्याः स्वरूपं परिलक्ष्यते। बुद्धितत्त्वमस्या ग्राहकं भवति। अत्रत्यो नादो भ्रमरीगुञ्जनप्रख्योऽव्यक्तस्फोटरूप वर्णं व्यञ्जयितुं प्रभवति। एतत्पूर्ववाग्युगले वायोः सूक्ष्मतमावस्थायां स्थितिरासीत्, अत्र तु सूक्ष्मतरावस्थां स भजते। किं चेतः पूर्वयोर्वाचोर्वर्णानां क्रमिकी स्थितिर्नासीत्, अत्र तु क्रमोऽपि परिलक्ष्यते। अत एवात्र मयूराण्डरसं दृष्टान्तत्वेनोदाहरन्ति। यथा अण्डावस्थायामवयवक्रमरहितो रस एव तिष्ठति, अण्डस्फोटानन्तरं च मयूरोऽवयवक्रमविन्यासपूर्वकं घटित उपलभ्यते, तद्वन्मध्यमायाः पूर्वं वर्णक्रमराहित्येऽपि मध्यमायां तत्साहित्यमनुभूयत इत्यर्थः। अत्र प्रमाणानि—

(क) "ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या

मध्यमा वागुच्यते । × × × × युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते । तत्र मध्यमानादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जकः । × × × मध्यमानादश्च सूक्ष्मतरः, कर्णपिधाने जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः × × × × शब्दब्रह्मरूपस्फोटव्यञ्जकश्च" (परमलघुमञ्जूषा-स्फोट-विचार) इति ।

(ख) "विजृम्भणोन्मुखी लक्ष्मीः पश्यन्ती सा क्रियामयी ।
भावं संस्कृत्य संस्कारैः समर्थाख्यां विवर्तनाम् ।
भृङ्गीव निनदन्ती सा हृदब्जे याति विस्तृतिम् ।
वाच्यवाचकभावेन लोलीभूता क्रियामयी ।
तदा संस्कृतयः सर्वाः स्मृतिं पुष्यन्ति वाच्यगाः"

(अहिर्बुध्न्यसंहिता—१६/६०-६२) इति

(ग) "केवलं बुद्ध्युपादाना क्रमाद्वर्णानुपातिनी
अन्तःसंजल्परूपा तु न श्रोत्रमुपसर्पति
प्राणवृत्तिमतिक्रम्य वर्तते मध्यमाह्वया ॥"

(वाक्यपदीयस्य १/१३३ कारिकास्थ भावप्रदीपधृतमुद्धरणम्) इति च ।

ततः परमूर्ध्वमाक्रामता वायुना कण्ठदेशेऽभिव्यज्यते सकल-श्रोत्र-ग्राह्योच्चारयितुः प्राणवृत्तिमाश्रयन्ती नादेनोपबृंहिताऽन्तिमा वाग् वैखरी । अस्याश्चावस्था पूर्णविकसिता श्रुतिश्राव्यावस्था । अत्र वर्णानां क्रमः सम्यगेवानुभूयते । उच्चारणक्रिया च परिपूर्णतां गच्छति । उच्चारण-स्थानेषु जिह्वादिस्पर्शासंस्पर्शहेतुकं वाय्वाघाततारतम्यमस्यामेव वर्णवैविध्य सृजति । वैखर्याः स्वरूपं यथा भावप्रदीपोद्धृतेऽष्टप्रकरणे—

"तत्र सा वैखरी श्रोत्रग्राह्या यार्थस्य वाचिका
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।
प्रयोक्तॄणामियं प्रायः प्राणवृत्तिनिबन्धना"

(वाक्यपदीय १/१३२स्थ) इति ।

तन्त्रशास्त्रं वाचामिदं चतुष्टयत्वमङ्गीकरोति । तथा च प्रपञ्च-सारतन्त्रम्—

"मूलाधारात् प्रथममुदितो यस्तु भावः पराख्यो
पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ् मध्यमाख्यः ।
वक्त्रे वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्ना-
बद्धस्तस्माद् भवति पवनप्रेरितो वर्णसंघः" (२/४३) इति ।

नागेशादिभिरपि तदेव गृहीतम् । परं तु प्राचीनवैयाकरणैस्तिस्र एव पश्यन्ती-मध्यमा-वैखर्यः स्वीकृताः । यथोक्तं वाक्यपदीये—

"वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्" (१/१४३) इति ।

महाभारतेऽपि

"प्राणापानान्तरे देवी नित्यं वाग् वै स्म तिष्ठति"
(आश्वमेधिकपर्व २१/१६)

इति प्राणकेन्द्रस्य हृदयस्यापानकेन्द्रस्य पायोश्च मध्य एकैव वाङ् निरूपिता । अनुपदोक्त-परा-पश्यन्ती-लक्षण-घटितैकैव पश्यन्त्यष्ट-प्रकरणे प्रदत्ता । यथा—

"अविभागेन वर्णानां सर्वतः संहृतक्रमा ।
स्वयंप्रकाशा पश्यन्ती मयूराण्डरसोपमा
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी

(भावप्रदीप १/१३२ श्लोकस्थ) इति ।

केचित्तु पश्यन्तीमेव परेति व्यपादिक्षन् । तथा हि वैयाकरणमतमनु-वदन्ती शिवदृष्टिः—

"इत्याहुस्ते परं ब्रह्म यदनादि तथाऽक्षयम्
तदक्षरं शब्दरूपं सा पश्यन्ती परा हि वाक् ॥

(भावप्रदीप १/१४३ श्लोकस्थ) इति ।

वस्तुतस्तु एकस्यैव ब्रह्मणः परब्रह्म-कार्यब्रह्मेति भेदनिरूपणवदेकस्या एव सूक्ष्माया वाचः परा-पश्यन्तीति द्विधा करणे न तत्त्वलाघवम्। केचित् पश्यन्तीवैखर्योर्मध्यवर्त्तित्व मध्यमानामकरणे बीज कल्पयन्ति, परायाश्च पृथगस्तित्वमस्मादेव कारणाद् विप्रतिपद्यन्ते । परं त्विद-मन्यथाऽपि समर्थयितुं शक्यमित्युत्पश्यामः । यथा—मध्यमायाः पूर्वं पश्यन्त्यां परावाचि वा वाचोऽव्यक्तावस्था, तस्याः परं वैखर्यां च व्यक्तावस्था, मध्यमायां तूच्चारयितुः सविधे व्यक्ता श्रोतुः सविधे चाव्यक्ते-ति व्यक्ताव्यक्तरूपा मध्यमावस्थेति सेयमवस्था मध्यमानाम्नः प्रयोजिकेति ।

एवं परापश्यन्त्योर्मतान्तरे परायां वा ब्रह्मरूपता वैयाकरण-सम्मता । सिद्धान्तशैवादिमते त्वासां चतसृणामपि वाचां जड़त्वं ब्रह्मणश्च तद्भिन्नत्वं प्रकाशितम् । तथा च तन्मतं प्रतिपादयति भावप्रदीप उक्तम्—"शिवः शुद्धबिन्दुं क्षोभयति । तेन च स शब्दार्थसृष्टिधारां जनयति । सा च शब्दधारा परा-पश्यन्ती-मध्यमा-वैखरीरूपा शुद्धा । ततोऽशुद्धबिन्दुः क्षुब्धोऽशुद्धां शब्दधारां जनयति । सा च परा-पश्यन्ती-मध्यमावैखरीरूपा अशुद्धा । द्विविधस्यापि बिन्दोर्जड़त्वेनादिचात्मकत्वात् तत्परिणामभूता द्विविधापि परादिरूपा वागचिद्रूपैव । तस्या अतिक्रम एव बन्धनच्छेद-लक्षणो मोक्षः, न तु तादात्म्यम्" (१/१३३ श्लोकस्थ) इति ।

## ११ । मध्यमावैखर्योः सप्त स्वराः

"सप्त वाचः स्थानानि भवन्ति, उपांशुध्याननिमदोपब्दिमन्मन्द्र-मध्यमताराणि" (२३/४-५) इति तैत्तिरीयप्रातिशाख्यम् । अत्र स्थानपदेन कण्ठादिस्थानानां न परामर्शः, परं तूपांश्वादीनां सप्तानां स्वराणाम् । एते स्वराः परापश्यन्त्योर्न भवन्ति, एषां लक्षणस्य तत्राप्रसक्तेः । अपि त्वेते मध्यमावैखर्योः स्वराः । तत्र प्रथमे चत्वारो मध्यमायाः स्वराः,

शिष्टास्तु वैखर्या इति तेषां स्वरूपपर्यालोचनेन ज्ञायते । तथाहि तत्रैव लिखितमुपांश्वादीनां चतुर्णां लक्षणं यथा—"करणवदशब्दममनःप्रयोग-मुपांशु । अक्षरव्यञ्जनानामनुपलब्धिर्ध्वानः, उपलब्धिर्निमदः, सशब्द-मुपब्दिमत्" (२३/६-६) इति ।

इमानि सूत्राणि यथा व्याख्यायन्ते व्याख्यातृभिस्तस्मादयमर्थो निर्गलति—मध्यमाया उपांशुनामके प्रथमस्तर एते त्रयोऽनुभूयते—(१) उच्चारयित्रा क्रियमाणः प्रयत्नः (२) ईषच्छब्दः (३) ईषन्मनःप्रयोग-श्चेति । ईषदर्थे नञः प्रयोगादयमर्थः संपद्यते । ध्वानाख्ये द्वितीयस्तरे वर्णोऽनुभूयते, किन्तु तत्र स्वरव्यञ्जनयोस्तारतम्यं न लक्ष्यते । प्रातिशाख्ये-ऽक्षरशब्दस्यं स्वरपर्यायवाचित्वादेषोऽर्थः । तृतीये निमदस्तरे तु तादृशतारतम्यं लक्ष्यत एव । वैखर्या निकटवर्त्तिन्युपब्दिमन्नामके मध्यमाया अन्तिमस्तरे वैखर्या मन्द्राख्यात् प्रथमस्तरात् किञ्चिदूनः शब्दोऽनुभूयते । "उरसि मन्द्रं कण्ठे मध्यमं शिरसितारम्" (२३/१०) इति तैत्तिरीयप्रातिशाख्ये वैखर्या मन्द्रमध्यमतारस्तरविषये कथितम् । ते च स्तरा यथाक्रमं शार्दूलगर्जन-चक्रवाककूजितमयूरहंसकोकिलस्वरैः संवदन्तीति पाणिनीयशिक्षायाम् । यथा—

> "प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरूतोपमेन
> मध्यन्दिने कण्ठगतेन चैव चक्राह्वसंकूजितसन्निभेन ।
> तारं तु विद्यात् सवन तृतीयं शिरोगतंतच्च सदा प्रयोज्यम्
> मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन"
>
> (श्लो ३६, ३७) इति ।

तत्र मध्यमास्तराः क्रमिकाः । उपांशु-ध्वान-निमदो-पब्दिमतां पूर्वपूर्वस्याविर्भावाभाव उत्तरोत्तरो नाविर्भवतीति यावत् । वैखरीस्तरास्तु

न तथा । उच्चारयितुः प्रवृत्त्यनुसारं तत्र मन्द्र-मध्यम-तारेभ्य एक एवोत्पद्यते, न तु क्रमेण त्रयः ।

पूर्वोल्लिखिते स्वरसप्तके सूक्ष्मतमः खलूपांशुस्वरो यदर्थमीषच्छब्दोऽपेक्ष्यते । पश्यन्त्यां तु स नापेक्ष्यत इति यदाऽयं स्वरः पश्यन्त्याः स्वरो नैव भवितुमर्हति, तदा कथंकारं पश्यन्त्या अपेक्षयाऽपि सूक्ष्मतरायाः परायाः स्वरो भवेत् ? ध्वानादीनां तूपांश्वपेक्षयाऽपि स्थूलत्वात्तेषां परापश्यन्त्योरनन्तर्भावः स्थित एव ।

## १२ । वर्णानां परममूलं वर्णोद्गमक्रमश्च

विश्वप्रपञ्चः खलु नामनामिमयः । तत्र नामिनोऽर्थाः, नामानि च तदर्थप्रतिपादकाः शब्दाः । तेन विश्वस्य यत् परममूलं वर्णानामपि तदेव परममूलम् ।

आस्तिकभारतीयदर्शनानुसारं वर्णानां मूलभूतं वस्तु दृश्यमानचराचरविलक्षणं किमप्यनिर्देश्यं तत्त्वम् । तच्च तन्त्रादिमते निस्तरङ्गमहाम्भोधिवन्निश्चलमभेद्यं गुणधर्मक्रियारहितमनाद्यनन्तं सच्चिदानन्दप्रख्यं निरुपाधिकं किमपि शान्तं तत्त्वं वर्वर्ति सर्वोपरि ।

सारदातिलके तत्तत्त्वं शिवः । तथा च तत्र—

"निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः ।
निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः
सच्चिदानन्दविभवात्सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः" (१/६,७)

इत्यादिना शिवात् सृष्टिमुल्लिख्य तस्य महाशक्त्या कुण्डलिन्या कृतो वर्णसृष्टिक्रम इत्थमुक्तः—

"सा प्रसूते कुण्डलिनी शब्दशक्तिमयी विभुः
शक्तिं ततोध्वनिस्तस्मान्नादस्तस्मान्निरोधिका ।
ततोऽर्धेन्दुस्ततो बिन्दुस्तस्मादासीत् परा ततः
पश्यन्ती मध्यमा वाचि वैखरी शब्दजन्मभूः"

(१/११०-१११) इति ।

अत्र तद्विदो वदन्ति यत् कुण्डलिनी ज्येष्ठा-रौद्रयम्बिकारूप-शक्तित्रयेण प्रथम परिणमति । तत एताः शक्तयः परस्परं योगवियोगाभ्यां नवप्रकाराः संपद्यन्ते । ततः प्रतिप्रकारमेकैके वर्णवर्गे जाते नव वर्गा भवन्ति । ते च वर्गा अ-क-च-ट-त-प-य-श-क्षरूपाः । एतद्वर्गान्तर्गताः पञ्चाशद्वर्णाः । तथाच शिवसूत्रविमर्शिनीधृतं मालिनीवार्त्तिकम्—

"एकैवेत्थं परा शक्तिस्त्रिधा सा तु प्रजायते ।
आभ्यो युक्तवियुक्ताभ्यः संजातो नववर्गकः ।
अकारादिक्षकारान्ता स्थिता पञ्चाशता भिदा"

(२/३ शिवसूत्रस्थ) इति ।

अहिर्बुध्न्यसंहितायामपि सारदातिलकक्रमेण शक्तिनादबिन्दुषूत्पन्नेषु बिन्दोर्नामनामीति द्विविधा विश्वरचना जातेति प्रकाशितम् । यथा—

"तस्या देव्याः क्रियाशक्तेः स्थितिं मन्त्रमयीं शृणु ।
उद्यन्ती सा क्रियाशक्तिर्भजते नादरूपताम् ।
स बुद्बुदवदम्भोधौ क्वचिदुन्मेषमृच्छति
अनुद्रुतगतः सोऽथ योगिभिर्बिन्दुरुच्यते ।

× × × ×

नामनामीति रूपेण स बिन्दुर्भिद्यते द्विधा ।
तत्र नामोदयं प्राप्य शब्दब्रह्म प्रवर्त्तते"

(१६/३६, ३७, ३८) इति ।

एवं शब्दब्रह्म प्रतिपाद्य विसर्गादिक्रमेण नानावर्णसृष्टिस्तत्राभिहिता। यथा—

"बिन्दुशक्तेरमुष्यास्तु भूयोऽपि शृणु विस्तरम्।
उदेत्येषा विसृष्टाख्या शब्दशक्तिमयी परा।
एकानेकविचित्रार्था नानावर्णविकारिणी"
(१६/४२, ४३) इति।

कामकलाविलासतन्त्रानुसारं प्रलये सच्चिदानन्दमये परमशिवेऽन्तर्मुखीभूयैकाकारेण तिष्ठन्ती परमशिवपर्यङ्कनिलयेति स्तूयमानाऽव्याकृता विमर्शशक्तिर्यावत्पर्यन्तं विश्वप्रपञ्चसिसृक्षया नैव बहिर्मुखीभवति, तावत्पर्यन्तं परमशिवस्य प्रकाशः प्रकाश्यान्तराभावादात्मकेन्द्र एव तिष्ठति। विशददर्पणतुल्यायां विमर्शशक्तावुन्मिषितायां तु रविकिरणनिभः परमशिवप्रकाशस्तत्र प्रविशति। तदानीमेव परमशिवो विशदे विमर्शशक्तिदर्पणे तस्याहंस्वरूपमवलोकते; 'पूर्णोऽहम्' इत्यात्मोपलब्धिं करोतीति यावत्। अनेनैव चेतनजगति चित्ते महाबिन्दुरूपेणाध्यवसितो ज्ञानस्य प्रथमोन्मेषो दर्पणपतितस्य रविकिरणस्य कुड्ये प्रतिफलनमिव भवति। अत उक्तम्—

"परशिवरविकरनिकरे प्रतिफलति विमर्शदर्पणे विशदे।
प्रतिरुचिरुचिरे कुड्ये चित्तमये निविशते महाबिन्दुः"
(श्लोक ४) इति।

इत्थमेतन्मते सिसृक्षायाः पूर्वमनुज्जृम्भितां विमर्शशक्तिं गर्भीकृत्यावस्थितः परमशिव एव वर्णानां परममूलम्।

सांख्यसिद्धान्ते स्थूलशब्दस्य प्रकृतिः सूक्ष्मशब्दात्मकमाकाशतन्मात्रम्, तस्याः प्रकृतिरहंकारश्चैतावता न परिसमाप्यते, अहंकारोऽपि महत्तत्त्वस्य विकारः, महत्तत्त्वमपि मूलप्रकृतेरिति त्रिगुणसाम्या-

त्मिकाऽनादि मूलप्रकृतिः साक्षिणः पद्मपत्रवन्निर्लिप्तस्य पुरुषस्य सान्निध्यमात्रादेव क्रमविकारमापन्ना विश्वं सृजतीति पुरुषः, प्रकृतिश्चेति द्वयं शब्दस्य तदन्तर्गत वर्णानां च परममूलम्।

अस्मिन् विषये प्रत्यक्षप्रमाणसर्वस्वाश्चार्वाका इव पाश्चात्यपण्डिता अनिर्देश्यं मूलभूतं तत्त्वमविवेचयन्तः फुप्फुसं वर्णानां मूलोद्गमस्थानं वदन्ति इति सत्यम्; परन्तु तेषु केचिदात्मानं स्वीकुर्वन्त आत्मन एव वर्णानामुद्गममाचक्षत इति W. S. Allen महोदयेन Phonetics in Ancient India ग्रन्थ उदाहृतम्[1]।

आत्मैव वर्णोद्गमस्य परममूलमिति प्रकाशयन्ती पाणिनीयशिक्षा वर्णोद्गमप्रकारमेवमाह—

"आत्मा बुद्ध्या समर्थ्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्"

(श्लो. ६, ७) इत्यादि।

ज्ञानेच्छाक्रियाख्यास्वात्मनस्तिसृषु मुख्यशक्तिष्वस्फुरितासु वर्णोच्चारणं नैव सम्भवतीति मन्यमानेयं शिक्षैतासां क्रमस्फुरणमित्थं प्राचीकटत्—प्रथमं ज्ञानशक्तिराविर्भवति। यस्य वस्तुनोऽवबोधार्थमुच्चारणं क्रियते, ज्ञानशक्तिस्तद्वस्तु प्रासङ्गिकवस्त्वन्तरैस्तस्य च सम्बन्धमित्युभयं बोधयति। यथा—'अहं ग्रामं गच्छामी' त्युक्ते तत्रत्यानां त्रयाणां पदाना-

1. Zeno is quoted as defining speech in term of "a stream of air extending from the principal part of the soul to the throat and the tongue and the appropriate organs"—(processes, p. 21)

मर्थस्तेषां परस्परसम्बन्धश्च प्रथमं बुध्यते। ज्ञानोदयानन्तरमिच्छाशक्ति-र्जागर्ति। ततो ज्ञातानां वस्तूनां मध्यात् कस्यचिद्विषये वक्तुमिच्छा भवति। इच्छाशक्तेरुन्मेषानन्तरं जैवस्पन्दात् क्रियाशक्तेरुद्रेको भवति। उद्रिक्तायां च क्रियाशक्तावमूर्तो जीवात्मा मूर्तमभौतिकमन्तरिन्द्रियं मन उत्थाप्य कार्ये नियोजयति। तच्च सव्यापारीभूय कायवर्तिनं महाभूत-मग्निमुद्दीपयति। प्राणी यत् किमपि कर्म कुरुते, तत्र शारीरिकोत्तापः कारणं भवति। असति तापे तु न किमपि कर्त्तुं शक्यते। उच्चारणकार्यार्थ-मपि कायाग्नेरुत्तेजनमपरिहार्यम्। उत्तेजितश्च कायाग्निरन्यं महाभूतं वायुं प्रेरयति। शरीरे खलु प्राणापानसमानोदानव्यानाख्याः पञ्च वायवो भवन्ति। वस्तुतो वायुरेकोऽपि स्थानकार्यभेदात् पञ्चधा व्यपदि-श्यते। तत्र वर्णोच्चारणं कण्ठदेशे व्यापारशीलेनोदानवायुनैव भवति। सर्वशरीरगो व्यानवायुस्तत्सहचरो भवति। मूलाधारादेव वायोरुपक्रम इति पक्षे मूलाधारवर्त्यपानवायुर्नाभिमण्डलपर्यन्तं गत्वा तत्रत्यं समान-वायुं प्रेरयति, समानवायुश्च हृद्वर्तिनं प्राणवायुं प्राणवायुश्चोदानमिति वायुप्रेरणक्रमो बोध्यः। स च वायुर्वैखरीसीम्नि प्रसरन् मन्द्रमध्यमतारान् स्वराञ्जनयतीति प्रागुक्तम्। वायोरेतद्भेदपञ्चकानाग्रहपक्षे प्राणो वर्णो-च्चारणसाधनमिति भणितिः।

वाक्यपदीयेऽप्यन्तःकरणावच्छिन्नज्ञानमनेनैव क्रमेण वर्णस्य कारणं भवतीत्युक्तम्। पार्थक्यं त्वन्तःकरण-मनः-प्राण-वाचामुत्तरोत्तररूपेण परिणामस्तत्र शंसितः, न तु पृथक्त्वेनावस्थितिः। तथा हि स्फोटाख्यं सूक्ष्मवाग्ब्रह्मान्तःकरणवृत्तिरूपेण तिष्ठति, वक्तुर्वर्णोच्चारणे प्रवृत्तौ सत्या-मियमन्तःकरणवृत्तिर्मनोरूपं धत्ते, मनः प्राणवायुरूपं प्राणवायुश्च विविध-श्रुतिविशिष्टं विविधवर्णरूपमिति ज्ञानस्य स्थूलशब्दभावापत्तौ क्रमस्तत्र-दर्शितः। तथा च तत्रत्याः श्लोकाः—

"अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥
स मनोभावमापद्य तेजसा पाकमागतः।
वायुमाविशति प्राणमथासौ समुदीर्यते ॥
अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ॥
विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः।
प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते ॥"

(१/११२-११५) इति।

अनेन क्रमेण सूक्ष्मं स्फोटात्मक शब्दब्रह्मोच्चार्यमाणवर्णरूपेण विवर्त्तते। तत्र व्युत्क्रमेण वर्णानां प्राणे, प्राणस्य मनसि, मनसः सूक्ष्म-शब्दब्रह्मरूपेणावस्थितेऽन्तःकरणावच्छिन्न-चैतन्ये विलय एव वैयाकरणमते मुक्तिः। अयमेव 'क्रमसंहारयोग' इति वाक्यपदीये, 'वाग्योग' इति च महाभाष्ये वर्णितः। तत्र कदाचित् प्राणस्य व्यक्तवाचि लयः, कदाचिच्च व्यक्तवाचः प्राणे लयः प्राकृतैरप्यनुभूयते। "यदा जनो वर्णोच्चारणं करोति, तदा प्राणवायुं नानुभवति, वर्णेन प्राणस्य कवलनात्; प्राणानु-भूतिवेलायां च नोच्चारयितुं प्रभवति, प्राणेन वर्णस्य कवलनात्" इत्या-कारेणायमेवार्थः प्रदर्शित ऐतरेयारण्यके। यथा—"तद् यत्रैतदधीते वा भाषते वा, वाचि तदा प्राणो भवति, वाक् तदा प्राणं रेळ्हि। अथ यत्र तूष्णीं वा भवति स्वपिति वा, प्राणे तदा वाग् भवति" (३/१/६/१४) इति। "वाक्प्राणयोर्यश्च होमः परस्परम्" (१/४) इत्यनेन ऋक्प्रातिशाख्य इदमेव तत्त्वं वाक्प्राणयोः परस्परहोमरूपेण व्यपदिष्टम्।

शब्दोच्चारणप्रवृत्तौ कायाग्नावुद्दीपित उच्चारणसाधकवायोः प्रेरणात् पूर्वं वागिन्द्रिये जिह्वाया ओष्ठस्य च तत्तद्वर्णोच्चारणानुकूला स्थितिर्जायते। तदनन्तरमेव वायोरूर्ध्वगमनमित्यनुभूतिसिद्धः क्रमः। स च वाक्यपदीये लिखितः। यथा—

"आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्
स्थानानामभिघातश्च न विना शब्दभावनाम्"
(१/१२२) इति।

इत्थं कुतश्चिदाभ्यन्तरप्रदेशान्निर्गत्य वर्ण उच्चारणस्थानेषु वायोरभिघातानन्तरमुच्चार्यते।

# तृतीयः परिच्छेदः

## बाह्यप्रयत्नाः

### १३। द्विविधःप्रयत्नः

उच्चारयितुः प्रयत्नवशाद् वर्णोच्चारणं भवतीत्युक्तम्। कीदृशोऽयं प्रयत्न इत्यपेक्षायामत्र तद्विदो द्विविधं प्रयत्नमाचक्षते—बाह्य आभ्यन्तरश्चेति। आभ्यन्तरशब्द आस्याभ्यन्तरवाचकः, मुखविवराभ्यन्तरं बोधयतीति यावत्। तस्य सीमा "ओष्ठात् प्रभृति प्राक्काकलकात्" (१/१/६ सूत्रस्थ) इति महाभाष्ये निरधारि। उच्चारणार्थं जिह्वादिकेन मुखविवरे यः प्रयत्नः क्रियते स आभ्यन्तरप्रयत्नः (intrabuccal effort)। तथा चोक्तं लघुशब्देन्दुशेखरे—"तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वादाभ्यन्तरा इत्युच्यन्ते" (संज्ञाप्रकरण पृ. ३५) इति। एतत्सीमाया बहिर्यः खलु प्रयत्नः क्रियते स बाह्यप्रयत्नः (extrabuccal effort)। तदुक्तमुद्द्योते—"गलविवरविकासादिकराश्चास्यबहिर्भूते देशे कार्यकरत्वाद् बाह्याः" (१/१/६ सूत्रस्थ) इति। अत्र मुखविवराद् बहिरित्यनेन त्रयोऽर्थाः प्राप्नुवन्ति—(१) ओष्ठात् परम् (२) काकलकाद्धः (३) नासिकायां चेति। परन्त्वोष्ठात्परं शरीरांशस्याभावात् तत्रोच्चारणप्रयत्नः कर्तुं न शक्यत इति सोऽर्थोऽपाकृतो भवति। शिष्टमर्थद्वयं संभाव्यते।

तत्रापि नासिकास्थाननिरूपणे मतभेदाद् येषां मते नासिकाऽऽस्यानन्तर्गता, तेषामेव मते नासिकायां कृतो यत्नो बाह्यप्रयत्नः। "न च नासिकाया आस्यानन्तर्गतत्वपक्षे" (२/१/६ सूत्रस्थ) इत्युद्द्योते नागेश

इदं मतं सूचितवान् । शब्दकौस्तुभे तु नासिकापदेनान्यत् किंचिदास्या
र्गतस्थानं गृहीतम् । तन्मतेऽनुनासिको बाह्यप्रयत्नो न भवति । आस्या
न्तरप्रयत्नएव । तथा चोक्तम्—"नासिका हि न बाह्या वर्णोत्प
निमित्तम्, तत्र जिह्वाग्रादिव्यापारविरहात् । किन्तु अन्तरास्ये वि
चर्मास्ति पणवचर्मवत्, तत्सबद्धो रेखाविशेषो नासिका । स वै वर्णोत्प
निमित्तमिति सिद्धान्तात्" (पृ. ११८) इति ।

गलविवरे तदधो वा बाह्यप्रयत्ने मुखविवरे चाभ्यन्तरप्रयत्ने स
तत्प्रयत्नाभ्यां प्रेर्यमाणो वायुरेव वर्णोच्चारणे निमित्तत्वं याति । अत
तत्तत्प्रयत्नेषु फलरूपेण, वर्णानां तत्तदुच्चारणेषु च कारणरूपेण वायो
गुणकर्मभेदमुत्पश्यामः । स च गुणकर्मभेद इत्थंकारं विभक्तुं शक्यः—

(क) वेगः ।

(ख) परिमाणं चेति वायो द्वौ गुणौ ।

बायोस्त्रीणि कर्माणि तु—

(ग) स्वरयन्त्रस्य संकोचप्रसारजनितं वायोः सबाध-निर्बा
निर्गमनम् ।

(घ) अधिजिह्वानियमितं जिह्वौष्ठनियमितं वा वायोर्निःसरण

(ङ) उच्चारणस्थानेषु वायोराघातः ।

तत्र जिह्वयौष्ठेन च नियमितं वायोर्निःसरणम्, उच्चारणस्था
वायोराघातश्चेति द्वे वायुकर्मण्याभ्यन्तरप्रयत्नस्य विषयौ, तदितरा
वायोर्गुणकर्माणि च बाह्यप्रयत्नस्य । अस्मिन् परिच्छेदे केवलं बाह्यप्रय
विषये विविच्यते ।

## १४। बाह्यप्रयत्ने

(क) वायुवेगः।

फुप्फुसाच्छीघ्रतरवेगेन निर्गच्छन् वायुः ख-छ-ठ-थ-फ-घ-झ-ढ-ध-भोत्पत्तौ निमित्तं भवति। तथा च ऋक्प्रातिशाख्यम्—"शीघ्रतरं सोष्मसु प्राणमेके" (१३/६) इति। प्राणस्य शीघ्रतरत्वे वायोर्गुणाधिक्य हेतुरिति युक्तिरेतत्सूत्रस्थ पशुपतिव्याख्यायां प्रदत्ता। यथा—"सर्वेषु वर्णेषु स्थानकरणानुप्रदानानि त्रयो गुणाः समानाः, सोष्मसु च ऊष्मा गुणोऽधिकः। तत्र गुणबहुत्वात् मात्राकालेन शैघ्र्याद् ऋते न शक्यम् उच्चारयितुम् इति तेषां शीघ्रतरं प्राणं मन्यन्ते" इति। एतान् संस्कृतविद्वांसो महाप्राणवर्णानाचक्षते। एषामुच्चारणार्थं क्रियमाणो वेगाख्यः प्रयत्नोऽपि महाप्राण इत्युच्यते। एवं शब्दशास्त्रे सर्वेषां प्रयत्नानां यन्नाम, तत्प्रयत्नोच्चार्याणां वर्णानामपि तदेव नामोपलभ्यते।

शषसहा अस्यां महाप्राणश्रेण्यामन्तर्भवन्तीति मध्यसिद्धान्तकौमुदी। यथा—"वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः" (१/१/६ सूत्रस्थ) इति। अत्रशिष्टव्यञ्जनवर्णोच्चारणे वायुवेगः शिथिलो भवतीति तेऽल्पप्राणसञ्ज्ञकाः। तथा च सिद्धान्तकौमुदी।

"अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः"

(८/२/१ स्थ) इति।

आपिशलिस्तु वायुवेगतारतम्यपरिवर्तेन वायुपरिमाणतारतम्यमेव महाप्राणत्वाल्पप्राणत्व-प्रयोजकं मन्यते। यथा "महति वायौ महाप्राणः, अल्पे वायावल्पप्राणः" (८/१६, १७) इति।

पाश्चात्यसिद्धान्ते तु ऋक्प्रातिशाख्यमतानुगुणं शषसा अल्पप्राणत्वेन निगदिताः। तेषामल्पप्राण-महाप्राणभावेन वर्गीकरणं वाय्वाघाततीव्रतायां प्रतिष्ठितमित्यनुमातुं शक्यम्। उदाहरणम्—छकारोच्चारणे यथा

वायोर्वेगः, शकारोच्चारणेऽपि तथैव। परंतु च्छकारोच्चारणे यथा खल्वाघाततीव्रता, न तथा शकारोच्चारणे; यतश्छकारोच्चारणकाले जिह्वाताल्वोः पूर्णस्पर्शवशेन वायोः कार्त्स्न्येन रोधादाघाततीव्रतोपलब्धिमेति। परंतु शकारोच्चारणकाले जिह्वाताल्वोरंशतः स्पर्शाद्वायोश्चांशतो रोधादाघाततीव्रता ह्रासमुपैति। अतएव च्छकारोच्चारण आघाततीव्रतावशान्महाप्राणत्वम्, शकारोच्चारणे त्वाघाततीव्रताह्रासादल्पप्राणत्वमिति वक्तुं शक्यते। इदमेव पाश्चात्त्यसिद्धान्त एषां महाप्राणानन्तर्भावे बीजं भवेदित्यनुमातुं शक्यम्।

## (ख) वायुपरिमाणानि

वर्णोच्चारणसाधनानि वायुपरिमाणानि खलु कालभेदानुसारेण द्विधा विभक्तुं शक्यानि। (i) समकालावच्छिन्नान्यपि विविधानि (ii) विषमकालानुपातेन विविधानि चेति।

### (i) समकालावच्छिन्नान्यपि विविधानि वायुपरिमाणानि

वेदे स्वराः कुत्रचिदुदात्तभावेन, कुत्रचिदनुदात्तभावेन, कुत्रचिच्च स्वरितभावेनोच्चार्यन्ते। एषामुच्चारणकाले समेऽपि वायुपरिमाणानि भिद्यन्ते। यथा—ह्रस्वोदात्त-ह्रस्वानुदात्त-ह्रस्वस्वरितानामेकैकस्योच्चारणकाल एकमात्रेति सत्यम्; परंतु प्रथमे वायुपरिमाणमधिकम्, द्वितीयेऽनधिकम्, तृतीये त्वेकस्मिन्नर्धेऽधिकमपरस्मिन्नर्धे च न्यूनम्। एव दीर्घोदात्त-दीर्घानुदात्त-दीर्घस्वरितेषु द्विमात्राकालावच्छिन्नानि प्लुतोदात्त-प्लुतानुदात्त-प्लुतस्वरितेषु च त्रिमात्राकालावच्छिन्नानि वायुपरिमाणान्युपयुज्यन्ते।

उदात्तानुदात्तस्वरितानां पारस्परिको भेदो वायुपरिमाणकृत इत्यत्र तैत्तिरीयप्रातिशाख्यं प्रमाणम् । यथा—

"अनुप्रदानात् संसर्गात् स्थानात् करणविन्ययात्
जायते वर्णवैशेष्यं परिमाणाच्च पञ्चमात्" (११/२) इति ।

अत्रानुप्रदानकृतः, संसर्गकृतः, स्थानकृतः करणकृतो वा भेदो न विद्यते । तेन पारिशेष्यात्परिमाणमेव भेदकं पर्यवस्यति ।

यद्यप्युदात्तादयो वैकृतध्वनेरेव धर्मा न तु प्राकृतध्वन्यपरपर्यायस्य वर्णस्येति प्राक् प्रदर्शिताच्छाङ्करभाष्या(१/३/२८स्थ)दवगम्यते तत्र ध्वनिशब्देन वैकृतध्वनेरभिप्रेतत्वात्, तथापि बहव एतान् वर्णधर्मानेव मन्यन्ते । तत्रोदात्त उच्चार्यमाणे स्वरतन्त्री दृढा (tense), स्वर यन्त्रमार्गः संकुचितः, स्वरश्च रुक्षो भवति । अनुदात्तोच्चारणे त्वेतद्वैपरीत्यम् । स्वर-तन्त्री शिथिला भवति, स्वरयन्त्रमार्गः प्रसारितो भवति, स्वरश्च कोमलो भवतीति यावत् । स्वरितए तयोर्मिश्रणात्मकः । तथा च तैत्तिरीयप्राति-शाख्ये—"आयामो दारुण्यमणुता खस्येत्युच्चैःकराणि शब्दस्य, अन्वव-सर्गो मार्दवमुरुता खस्येति नीचैःकराणि, समाहारः स्वरितः" (२२/९, १०, १/४०) इति ।

अयमेवार्थः प्रपञ्चितः Critical Studies in the Phonetic Observations धृतायां (p. 165) पारिशिक्षायाम् । यथा—

"यद् गात्रदैर्घ्यं दृढता च या ध्वने-
स्तथाणुता कण्ठविलस्य या च ।
एतानि कुर्वन्ति च शब्दमुच्चै-
र्यद्ध्रस्वता या मृदुता स्वरस्य ।
या विस्तृ (ता?) तिः कण्ठविलस्य चैताः
(कराणि?) कुर्वन्ति शब्दं निहतं च नित्यम्" इति ।

अत्र गात्रदैर्घ्यमिति स्वरयन्त्रस्य दार्ढ्यसूचकं ह्रस्वतेति च शैथिल्यसूचकम् ।

पाणिनीयसंप्रदाये त्वेषां स्वरूपनिर्धारणमन्यथा कृतम् । अत्राष्टाध्यायीसूत्राणि—"उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः" (१/२/२९-३१) इति । उच्चारणस्थानानि समानभावेनोर्ध्वाधोभागरूपेण विभज्य तद्भागद्वयेनोच्चार्यमाणाः स्वरा यथाक्रममुदात्तानुदात्तसंज्ञां भजन्ते, एतयोर्भागयोः प्रत्येकमर्धांशेनोच्चारणे तु स्वरः स्वरितसंज्ञामापद्यत इति सूत्रार्थो महाभाष्ये सिद्धान्तितः ।

अत्रोच्चैर्नीचैःशब्दयोरुच्चनीचोच्चारणश्रवणार्थकत्वं प्रत्याख्यातं महाभाष्ये, तादृशोच्चारणश्रवणयोर्व्यक्तिभेदेन भिद्यमानत्वेनापेक्षिकत्वात् । तथा च तत्रत्य विश्लेषणम्—"इदमुच्चनीचमनवस्थितपदार्थकम् । तदेव हि कंचित्प्रत्युच्चैर्भवति, कंचित्प्रति नीचैः । एव कंचित्कश्चिदधीयानमाह—किमुच्चै रोरूयसेऽथ नीचैर्वर्ततामिति । तमेव तथाधीयानमपर आह—किमन्तर्दन्तकेनाधीष उच्चैर्वर्ततामिति" (१/२/२९,३० सूत्रस्थ) इति ।

अनुदात्तार्थे नीचशब्द ऋक्तन्त्रादिषु प्रयुक्तः । "तस्यादित उदात्तमर्धह्रस्वम्" (१/२/३२) इत्यष्टाध्याय्यां पाणिनिः स्वरितस्य पूर्वार्धमुदात्तमन्तिमार्धं चानुदात्तं शंसति । एतद्वैपरीत्येन पूर्वार्धमनुदात्तमन्तिमार्धं चोदात्तमिति मतमपि समाकलितं तैत्तिरीयप्रातिशाख्ये "अनुदात्तसमो वा" (१/४२) इति सूत्रेण । उभयोरर्धयोर्युगपदेवोदात्तानुदात्तमिश्रणमिति मतान्तरमपि तत्र विद्यते । यथा—"सर्वप्रचण इत्येके" (१/४७) इति । तत्राधुनातनोच्चारणदृष्ट्या बहूनां वैदिकोच्चारणानुशासनानां च स्वारस्येन स्वरितोच्चारणे प्रथममतमेव ग्राह्यतमं प्रतिभाति । उदात्तानुदात्तस्वरितानां यथाक्रममुदाहरणानि ऋग्वेदीयस्वराङ्कनचिह्नेन सह

बन्धनीमध्ये प्रदीयन्ते। यथा—(१) (आये) (२) अर्वाङ् (३) अग्नि मी (ळे) इति। तत्रोदात्तश्चिह्नरहितः, अधो दीयमानम् '—' इत्यनुदात्तस्य चिह्नम्, ऊर्ध्वे दीयमानम् ' । ' इति चिह्नं च स्वरितस्य।

उदात्तानुदात्तयोः समाहारधर्मणः स्वरितस्य पृथङ् नामकरणे याथार्थ्यं त्वीदृशम्—ह्रस्वस्वरिते प्रथमार्धह्रस्वस्योदात्तता, द्वितीयार्ध-ह्रस्वस्य चानुदात्तता भवति। परंतु व्याकरणप्रातिशाख्यादावेकमात्रिकस्यैव स्वरस्य न्यूनतममात्रां स्वीकृत्य तस्य ह्रस्वेति नामकरणं दृश्यते, न पुन-रर्धमात्रिकस्य। अत एवार्धमात्रिकस्यावहेलनात्तत्स्थमुदात्तत्वमप्यवहेलितं भवति। उदात्तानुदात्तयोरर्धमात्रिकयोर्योग एकमात्रायां सत्यामपि, तत्रो-दात्तानुदात्तयोः प्रत्येकं समानभावेन स्थितत्वात्तयोरेकतरेण व्यपदेशो-ऽनुचितो भवति। अतस्तदर्थं स्वरितेति नामान्तरम्।

शुक्लयजुर्वेदस्योव्वटभाष्ये तूदात्तांशानुदात्तांशमेलने तदुभयांश-विलक्षणः कश्चित् स्वतन्त्रधर्मा स्वरः समुल्लसतीति सिद्धान्तितम्। तथा चोक्तम्—"स्वरितशब्देनोदात्तानुदात्तं निवर्त्य पृथक्श्रुति स्वरान्तरमभि-धीयते। यथा त्रपुताम्रयोः संयोगे धात्वन्तरस्य कांस्यस्योत्पत्तिः, यथा च गुडदध्नोरेकीभावे मार्जि (को ?) तोत्पत्तिः, एवमुदात्तानुदात्तसंयोगे स्वरितोत्पत्तिः" (१/१२६ सूत्रस्थ) इति। महाभाष्येऽप्यनुरूपो दृष्टान्तः प्रदत्तः। यथा—"शुक्लगुणः शुक्लः, कृष्णगुणः कृष्णः, य इदानी-मुभयगुणः स तृतीयामाख्यां लभते—कल्माष इति वा सारङ्ग इति वा। एवमिहाप्युदात्त उदात्तगुणः, अनुदात्तोऽनुदात्तगुणः, य इदानीमुभयगुणः स तृतीयामाख्यां लभते—स्वरित इति" (१/२/३१ सूत्रस्थ) इति। ऋक्तन्त्रे केवलमुदात्तांशस्यैव नाम स्वरितमिति गृहीतम्, न त्वनुदात्तांशस्यापि। यथा तत्रत्यं सूत्रम्—"आद्यार्धमात्रा स्वरितम्" (२/६/३) इति। ऋक्तन्त्र-विवृतौ स्वरितस्य पृथक्सत्ता न स्वीकृता। यथा तत्रत्यमुद्धरणम्—

"य एवोदात्त इत्युक्तः स एव स्वरितः स्वरः
प्रचयः प्रोच्यते तज्ज्ञैर्न चात्र स्वरितान्तरम्"
(पृ. १२) इति ।

"उदात्ताद्यास्त्रयः स्वराः" इत्यमरकोषे (श्लो १/६/८) । उदात्ताद्याः स्वरा (pitch sounds or accents) इति कथ्यन्ते । अकारादारभ्यौकारं यावत् सर्वेऽपि वर्णाः स्वरा (vowels) एव । यथा सिद्धान्तकौमुद्याम् —"अचः स्वराः" (८/२/१ सूत्रस्थ) इति । इत्थं द्विविधाः स्वराः । व्यञ्जनमनपेक्ष्योदात्तादिद्वारा स्वयं राजन्त इति व्युत्पत्त्या अकारादय एव वस्तुतः स्वराः । तेषां धर्मभूता उदात्तादयोऽपि धर्मधर्मिणोरभेदारोपात् स्वरा भवितुमर्हन्तीति नागेशस्य मतम् । तथाहि लघुशब्देन्दुशेखरे—"उदात्तादिभिः स्वयमेव राजन्त इति व्युत्पत्तेः । तद्धर्मत्वादुदात्तादयोऽपि स्वरा इत्युच्यन्ते" (सञ्ज्ञाप्रकरण पृ. ३६) इति । 'स्वर्यन्ते शब्द्यन्त इति स्वराः"—इति स्वृ शब्दोपतापयोरिति धातुनिष्पन्नव्युत्पत्तियोगोऽप्यत्र भवितुमर्हति । तेन स्वराणां स्पष्टोच्चारणवत्त्वं फलितम् ।

व्यञ्जनेषूदात्तादयो न तिष्ठन्ति । परन्तु स्वरवर्णनिकटस्थितेषु व्यञ्जनेषु स्वरवर्णगतानामुदात्तादीनां छायापात इव भवति । तथा च महाभाष्यम्—"नैते व्यञ्जनस्य गुणाः, किन्त्वच एव । तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते । तद्यथा—द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते"—(१/२/२९ सूत्रस्थ) इति ।

"उदात्तश्चानुदात्तश्च स्वरितप्रचिते तथा
निघातश्चेति विज्ञेयः स्वरभेदस्तु पञ्चधा" (७/१९)—

इति नारदीशिक्षायां प्रचितनिघाताभिधानौ स्वरावपि पृथक्तयोक्तौ । परन्त्वनयोरनुदात्तेऽन्तर्भावान्न चतुर्थः प्रकारः । सामवेदे गान्धर्वशास्त्रे च

प्रसिद्धा निषादर्षभगान्धारादयः सप्त स्वराश्चात्रैव स्वरत्रये यथायथमन्तर्भवन्तीति याज्ञवल्क्यशिक्षायामुक्तम्। यथा—

"उच्चौ निषादगान्धारौ नीचावृषभधैवतौ।
शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः" (श्लो ७) इति।

## (ii अ) विषमकालानुपातेन विविधानि वायुपरिमाणानि

ह्रस्वस्वरदीर्घस्वरप्लुतस्वराणामुच्चारणे कालस्य मात्रा (length or mora) यद्गुणा भवति, वायुपरिमाणमपि तद्गुणमेव भवति। यथा—ह्रस्वस्वरोच्चारणे कालमात्रैकगुणा, वायुपरिमाणमप्येकगुणम्। दीर्घस्वरोच्चारण उभयमपि द्विगुणं प्लुतस्वरोच्चारणे च त्रिगुणं भवति। उदात्तादय इवैतेऽपि स्वरस्य वैकल्पिका धर्माः। तेन प्रतिस्वरं ह्रस्वदीर्घप्लुतत्वेभ्य एकतममेव तिष्ठति। अत्र दीर्घे ह्रस्वसत्ता प्लुते च ह्रस्वदीर्घसत्ता नाशङ्क्या, यतो न केवलं तत्र कालमात्रायामाधिक्यम्, अपि तूच्चारणप्रकृतावपि पार्थक्यं परिलक्ष्यते। कु कू कू३ इति कुक्कुटरावो यथाक्रम ह्रस्वदीर्घप्लुतस्वराणामुदाहरणम्। श्लोकेषु प्लुतस्वरविचारो नास्ति। केवलं दूराह्वानादिषुप्लुतस्वरस्यावकाशः। अं इत्यत्राकारस्य मात्रा ¾ इति ७/८ इतिवा तिष्ठतीत्युव्वटभाष्यम्। यथा—"ह्रस्वामनुस्वारोपधामर्धस्वरभक्त्या पादमात्रयाऽर्धपादमात्रया वा असमाप्तां न्यूनाम्, ह्रस्वोपधमनुस्वारं च तावता कालेनाधिकमाहुरेके आचार्याः" (ऋ. प्रा. १३/१३ स्थ) इति। प्रणव ओकारः सार्धद्विमात्रक इति केचित्। अत्र तैत्तिरीयप्रातिशाख्यम्—"ओकारं तु प्रणव एकेऽर्धतृतीयमात्रं ब्रुवते" (१८/१) इति। "सवर्णदीर्घत्वे ऋति ऋ वा वचनम्, लृ ति लृ वा वचनम्" (१/१/९ सूत्रस्थ) इति महाभाष्ये विधीयमानौ ॠॡ इत्येतौ सार्धद्विमात्राविति मतान्तरं तत्रत्यप्रदीपव्याख्यया ज्ञायते। यथा—"येषां तु मतमर्धतृतीयमात्रा-

वेताविति—"इति । क्वचिद्ध्रस्वस्वरोऽपि परिस्थितिविशेषे द्विमात्रो भवति । यथा—(१) संयुक्तवर्णपूर्ववर्त्ती (२) शब्दान्तस्थितव्यञ्जनपूर्ववर्ती (३) वाक्यस्य श्लोकस्य वाऽवसानस्थितः स्वरो द्विमात्र इति शुक्लयजुः-प्रातिशाख्यस्य "संयोगपूर्वव्यञ्जनान्तावसानगताः स्वरा द्विमात्राः" (४/१०७) इति सूत्राज् ज्ञायते । यथाक्रममुदाहरणानि—(१) अश्वः (२) तत् (३) रामः पठति, न च मूर्खशतान्यपि ।

श्लोकेषु व्यञ्जनमात्राया अवहेलनेऽपि वेदाद्युच्चारणे तस्या उपयोगाच्छिक्षादिग्रन्थेष्वेतद्विषयका निर्देशा वर्तन्ते । यथा—

"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम्"—
(या. शि. श्लो. १३)

इति प्लुतार्थे वृद्धशब्दं सामवेदिनो व्यवहरन्ति । यथा ऋक्तन्त्रे—"तिस्रो वृद्धम्" (२/५/४) इति ।

मात्राया अयं कालविभागो मध्यमवृत्तिविषयक इति केचित् । ते खलु चतुष्कलैका मात्रा द्रुतवृत्तौ त्रिकला, विलम्बितवृत्तौ च पञ्चकला भवतीति शंसन्ति । यथा ऋक्तन्त्रे—

"द्रुतायां मात्रा, चतुष्कला मध्यमायाम्,
पञ्चकला विलम्बितायाम्" (२/४/१-३) इति ।

तिरश्चां मध्ये कस्य रावे का कालमात्रोपयुज्यते, एतद्विषयमवलम्ब्य पाणिनीयशिक्षायामुक्तं यत्—

"चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत् ।
शिखी रौति त्रिमात्रां तु नकुलस्त्वर्धमात्रकम्"
( श्लो. ४६) इति ।

व्यञ्जनस्यार्धमात्रकता न सर्वसम्मता। तथाहि—"दीर्घप्लुताभ्यां परस्य व्यञ्जनस्य स्वरपरस्य पादमात्रिकत्वमुक्तम्" इति Critical Studies in the Phonetic Observations ग्रन्थे (p. 185) धृता वैदिकाभरणव्याख्या। तेन वामशब्दे दीर्घपूर्वः 'म्' इति पादमात्रिकः, हे यियासो३ इत्यत्र प्लुतपूर्वः 'स्' इति च। पूर्वोक्तग्रन्थोद्धृतसर्वसम्मत-शिक्षामते त्वस्वरं व्यञ्जनं पादमात्रकम्। स्वरसंसर्गे तु तदेकमात्रापर्यन्त-मुच्चार्यते। तदुद्धरणं यथा—

"अस्वरं व्यञ्जनं नित्यमणुमात्रं प्रतीयते।
संसर्गाच्चेति बाहुल्यान्मात्रा वृद्धैः प्रकीर्त्तिता।"
(१/१५) इति।

अत्राणुशब्दस्यैकचतुर्थांशार्थत्वम्, "तदर्धमणु" (१/६०) इति शुक्लयजुः-प्रातिशाख्यात्। यथा वर्णास्तथा वर्णांशा अपि विविधमात्रयोच्चार्यन्ते। विविधमतानुसारं वर्णांशाः पादमात्रात आरभ्य सार्धैकमात्रां यावद्धार-यन्तीति सप्रमाणमग्रकोष्ठके प्रदर्श्यते।

## कोष्ठकम्—१ (वर्णांशमात्रासूची)

| वर्णाः | वर्णांशाः | वर्णांशमात्राः | वर्णमात्राः | प्रमाणानि |
|---|---|---|---|---|
| ऋ = | अ+र्+अ | $\frac{१}{४}+\frac{१}{२}+\frac{१}{४}$ | १ | उव्वट भाष्यम् (शु. य. प्रा. ४/१४४ सूत्रस्थ) |
| ऌ = | अ+ल्+अ | $\frac{१}{४}+\frac{१}{२}+\frac{१}{४}$ | १ | |
| ऋ = | अ+र् | $\frac{१}{४}+\frac{३}{४}$ | १ | अहिर्बुध्न्यसंहिता (१६/५३) |
| ऌ = | अ+ल् | $\frac{१}{४}+\frac{३}{४}$ | १ | |
| ए = | अ+इ | $\frac{१}{२}+१\frac{१}{२}$ | २ | पाणिनीय शिक्षा (श्लो. १६) |
| ओ = | अ+उ | $\frac{१}{२}+१\frac{१}{२}$ | २ | |
| ऐ, औ = | अ+इ, अ+उ | १+१, १+१ = | २,२ | |
| ,, ,, | ,, ,, | $\frac{१}{२}+१\frac{१}{२}$, $\frac{१}{२}+१\frac{१}{२}$ | २, २ | तैत्तिरीय प्रातिशाख्यम् (२/२६, २८, २९) |
| ,, ,, | ,, ,, | $\frac{३}{४}+१\frac{१}{४}$, $\frac{३}{४}+१\frac{१}{४}$ | २, २ | पशुपतिव्याख्या (ऋ.प्रा. १३/१६स्थ) |

## कोष्ठकप्रमाणानां यथासंख्यमुद्धरणानि—

(१) ऋकारे ऌकारे च यथासंख्यं रेफलकारौ कण्ठ्याणुमात्रयोर्मध्येऽर्धमात्रिकौ संश्लिष्टौ एकीभूतौ अविद्यमानपृथक्श्रुतिधरौ एकश्रुतिभूतौ भवतः।

(२) एकत्रिभागयोर्ऋद्ध्या अरयो ऋ स्मृतो बुधैः।
अलयोश्च तथा ऌत्वम्।

(३) अर्धमात्रा तु कण्ठ्यस्य एकारौकारयोर्भवेत्।
ऐकारौकारयोर्मात्रा।

(४) अकारार्धमैकारौकारयोरादिः। अकारोऽध्यर्धः पूर्वस्य शेषः। उकारस्तूत्तरस्य।

(५) यथा तत्र ह्रस्वोऽनुस्वारः पादमात्राधिक उपधा च तावता न्यूना, एवमिहापि द्रष्टव्यम्। इवर्णोवर्णयोर्भूयसी मात्रा अल्पीयसी अवर्णस्य, यस्मात्तयोर्वैषम्यान्न क्षीरोदकवत् संसर्गो भवति, तस्मात्तयोरवर्णस्य इवर्णोवर्णयोश्च पृथक् श्रवणं भवति।

वैदिकलौकिकसंस्कृतयोः अ-ओ इत्यनयोरनन्तरं स्थितयोर्यवयो-स्त्रयी गतिर्भवति—(१) लोपः (२) अलोपः (३) लेशो वा। "लेशो नाम नाश इत्यर्थः। लुप्तवदुच्चार्यते" इति च्छन्दोभाषा (तै. प्रा. १०/२० स्थ)। तत्र "लेशो वात्सप्रस्यैतयोः" (१०/१३) इति तैत्तिरीयप्रातिशाख्य उद्धृतं वात्सप्रमतम् उओपरकयोः अय्-आय्-अव्-आव्-स्थयवयोर्लेशोच्चारण-मनुशास्ति। शाकटायनमते स्वरघोषवर्णपरकयोः पदान्तवर्तियवयोर्लघु-प्रयत्नतरमुच्चारणं भवतीति निर्दिशति पाणिनिः "व्योर्लघुप्रयत्नतरः शाकटायनस्य" (८/३/१८) इत्यष्टाध्यायीसूत्रेण। लघुप्रयत्नतरमुच्चारणं लेशादभिन्नं प्रतीयते। प्रयत्ने लघुतरत्वं चैषां जिह्वाशैथिल्यजनकत्वेन। "यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं स लघूच्चारणः" (८/३/१८ सूत्रस्थ) इति सिद्धान्तकौमुद्यामभिधानात्। अत्र सूत्रे लघुप्रयत्नतरत्वविधाने-ऽप्युदाहरणदानवेलायां लघुप्रयत्नपक्षे भोयच्युत इति कथनाल्लघुप्रयत्न-लघुप्रयत्नतरयोर्भेदोऽवहेलित इति स्पष्टो भवति। ईदृशोदाहरणेषु लोपोऽपि स्वीकृतः। यथा—अष्टाध्याय्यां "लोपः शाकल्यस्य" (८/३/१९) इति, तैत्तिरीयप्रातिशाख्ये च "लुप्येते त्ववर्णपूर्वौ यवकारौ" (१०/१९) इति।

इङ्लिश्भाषायां they-ray प्रभृतिषु यकारो लेशात्मक इति मन्तुं शक्यम्। रस्य heart शब्दे स्वरवदुच्चारणं here शब्दे चोच्चारणाभावं वदन्[11] Otto Jesperson महोदयः यथाक्रमं तयोरणु-मात्रां लेशं च मन्यत इति प्रतीयते। William Jones प्रमुखाश्च feel प्रभृतिशब्देषु लमस्पष्टम् (dark) अभिदधत[12]स्तं लेशमाशेरते

---

11. "R, when not followed by vowel ××× is either frankly a vowel (as in here) or else nothing at all (as in heart etc.)"—Growth And Structure of the English Language (Sec. 3, Chap. 1, p. 2).
12. "Thus 'clear' l is used in leave ... while 'dark' l is used in feel—"An Outline of English Phonetics (Sec. 659, Chap. 29, p. 173).

alms, folk इत्यादिषु इङ्ग्लिश्शब्देषु तु लस्य लोप एव स्वीकृतः Otto Jesperson महोदयेन[13] । लेशाभिन्नं लघुप्रयत्नतरोच्चारणं परमाणुमात्रात्मकं भवेत् । "परमाण्वर्धाणुमात्रा" (१/६१) इति हि शुक्लयजुःप्रातिशाख्यम् । याज्ञवल्क्यस्त्वणुमात्रां लेशापेक्षया सूक्ष्मतरां केवलं मानसप्रत्यक्षस्य च विषयं मन्यते । विविधमात्राणामुच्चारणकाल-मनुभूतिपरिस्थितिं च निर्दिशन्ती तदीया शिक्षा वक्ति—

"निमेषो मात्राकालः स्याद् विद्युत्कालेति चापरे ।
सूर्यरश्मिप्रतीकाशात् कणिका यत्र दृश्यते
आणवस्य तु सा मात्रा मात्रा तु चतुराणवा
मानसे चाणवं विद्यात्कण्ठे विद्याद् द्विराणवम्
त्रिराणवं तु जिह्वाग्रे निःसृतं मात्रिकं विदुः" ।
(श्लो. ८-१०) इति ।

अनेन वायुव्यापारात् पूर्वमेव मानसेऽणुमात्रानुभूतिरित्यायाति । "हृदयस्थमणुं विद्यात्" (श्लो. ८) इति प्रतिपादयन्ती लोमशीशिक्षा तु वायुव्यापारोत्तरभाविनं लघूच्चारणमेवाणुमात्रकमाशेत इति सुव्यक्तं भवति ।

"आदाविव द्व्यणुककृत् परमाणुयुग्मम्" (३/१२५) इति श्लोकं नैषधीयचरिते रचयन् श्रीहर्षः स्पष्टमेवाणुपरमाण्वोर्भेदंबुध्यते । युगल-किशोरव्यासपाठकस्त्वणुतः सूक्ष्मरूपेण परमाणुं गृह्णन्नपि "तदतिसूक्ष्मं वाङ्मनसयोरगोचरं ब्रह्मैव" इति शुक्लयजुःप्रातिशाख्यस्य १/६१-सूत्रस्थप्रातिशाख्यकीर्तिप्रकाशटिप्पण्यां वक्ति । वस्तुतस्तु यया

13. "Note also the disppearance of 'l' in 'alms', 'folk' etc.—" —Growth And Structure of the English Language (Sec. 5. Chap. 1, p. 4).

कयाऽप्यंशमात्रयोच्चार्यस्य वर्णांशस्यानुच्चार्येणावाग्गोचरेण ब्रह्मणैक्य-कथनं नैव युक्त्या साधयितुं शक्यते। अणुपरमाण्वोः सूक्ष्मत्वादनुभूति-पार्थक्यमेवेदृशविकल्पे बीजम्। रेफात्परं स्वरपरक ऊष्मेतरव्यञ्जने विद्यमाने मध्येऽकारस्य चतुर्थोऽष्टमो भागो वोच्चार्यत इति "अन्यस्मिन् व्यञ्जने चतुर्थमष्टमं वा" (१/१०२) इति सूत्रेण प्रतिपादयताऽथर्वप्राति-शाख्येन स्वीकृत एकमात्राया अष्टमो भागः परमाणुमात्रारूपेण विवेक्तुं शक्यः।

एतावत्पर्यन्तं परमाणुमात्रात आरभ्य त्रिमात्रापर्यन्तं विमर्शो विहितः। संगीतज्ञास्त्वतोऽप्यधिकमात्रया गायन्ति। क्रन्दन्तोऽपि त्र्यधिका मात्रा उपयुञ्जते। ऋक्प्रातिशाख्येऽपि 'ओ'मित्यस्योच्चारणे तिसृणां चतसृणां षण्णां वा मात्राणामुपयोगः शंसितः। यथा—

"स ओमिति प्रस्वरिति त्रिमात्रः
प्रस्वारस्थाने स भवत्युदात्तः।
चतुर्मात्रो वाऽर्धपूर्वोऽनुदात्तः
षण्मात्रो वा भवति द्विःस्वरः सन्।

(१५/३) इति।

एवं त्रिमात्राधिक उच्चारणे विद्यमानेऽपि वर्णोच्चारणशास्त्रे तस्योपयोगाभावात्तद्विषय औदासीन्यमवलम्बितम्।

इदानीं प्राक्प्रदत्तप्रमाणानुसारं वर्णोच्चारणे प्रयुज्यमानानां मात्रा-—मात्रांशानां सूची सूक्ष्मस्थूलक्रमेण कोष्ठकमध्ये प्रदीयते।

# कोष्ठकम्—२

## विविधमात्रा-मात्रांशसूची

| क्र.सं. | स्वराः | मात्रा | उच्चारयितुरनुभूतिस्थानम् | उदाहरणम् | प्रमाणम् |
|---|---|---|---|---|---|
| १ | लोपः | × | × | ध्रुवौ+अस्मिन्> ध्रुवाअस्मिन् | अ. सू. पा. (८/३/१९) |
| २ | लेशः (लुप्तवत्) लघुप्रयत्नतरः लघुप्रयत्नः | १/८ | मानसम् | ध्रुवाव् अस्मिन् | तै.प्रा.(१०/२३) |
| ३ | अणुः, श्रुतिः | १/४ | मानसं हृदयं वा | ऋकारे प्रथमः स्वरांशः | उ. भा. (४/१४४सूत्रस्थ) |
| ४ | द्व्यणुकः | १/२ | कण्ठः | ऋकारे रेफांशः | " |
| ५ | त्र्यणुकः | ३/४ | जिह्वाग्रम् | " | ऋ.सं. (१६/५३) |
| ६ | सार्धत्र्यणुकः | ७/८ | निःसृतम् | अं इत्यत्र अकारः | प. व्याख्या (ऋ. प्रा. १३/१३स्थ) |
| ७ | ह्रस्वः | १ | जिह्वाग्रम् | अ | या.शि.(श्लो.१३) |
| ८ | सपादमात्रकः | १ १/४ | " | 'ऐ' इत्यत्र इकारांश 'औ' इत्यत्र उकारांशश्च | प. व्याख्या (ऋ.प्रा. १३/१९स्थ) |
| ९ | अध्यर्धमात्रकः | १ १/२ | " | " | तै प्रा. (२/२८) |
| १० | दीर्घः | २ | " | आ | या.शि.(श्लो.१३) |
| ११ | अर्धतृतीयः | २ १/२ | " | (i) ओमित्यत्र ओकारः (ii) ऋति ऋ वा लृति लृ वा इति विहितौ ऋलृ इति | तै. प्रा. (१८/१) प्रदीप व्याख्या (१/१/९ स्थ) |
| १२ | प्लुतः | ३ | " | आ ३ | या.शि.(श्लो.१३) |
| १३ | चतुर्मात्रः षण्मात्रो वा | ४, ६ | " | ओमित्यत्र ओकारः | ऋ.प्रा. (१५/३) |

अत्रेदं स्मतव्यं यत्—श्वसितकालमात्राणां न्यूनताया आधिक्यस्य वाऽनुपातेनोच्चारणे न्यूनाधिको वायुरुपयुज्यत इति। यद्यपि प्राग्विवेचित-प्रकारेणैकमात्रातो न्यूनाभिरध्यंशमात्राभिर्वर्णाशोच्चारणे पृथक्परिमाणो वायुरुपयुज्यत एव, तथापि तदर्थं स्वतन्त्ररूपेण बाह्यप्रयत्ननामानि शास्त्रेषु नैव प्रदत्तानि। तत्र हेतुः (१) मात्रांशानां सूक्ष्मत्वम् (२) शास्त्रीयप्रयोजनाभावश्चेति।

## (ii आ) वृत्तिः

ह्रस्वदीर्घप्लुतोच्चारणाय यथा विविधा कालमात्रा विविधं च वायुपरिमाणमावश्यकं भवति, तथा विविधानामुच्चारणधाराणां कृते पृथक् कालमात्राः पृथक् पृथग् वायुपरिमाणानि चोपयुज्यन्ते। बहुष्वेकमेव पुस्तक पठत्सु कश्चिच्छीघ्रमेव पाठं समापयति, कश्चित्तदपेक्षयाऽधिकेन समयेन समापयति। इतरश्चैतत्पाठकद्वयापेक्षयाऽधिकं समयं नयति। एवमन्ये स्वस्वप्रवृत्त्यनुसारं विविधं कालमुपयुञ्जते। तत्र यथा यथाऽधिकः काल उपयुज्यते, तथा तथाऽधिको वायुरप्युपयुज्यते। इमा उच्चारणधाराः शास्त्रे वृत्तिरित्युच्यन्ते।

वृत्तेर्बहुत्वेऽपि साधारणतया सा त्रिविधोक्ता—द्रुता, मध्या, विलम्बिता चेति। आसां तिसृणां वृत्तीनां कालनिर्देशोऽपि विहितः कैयटेन। प्राणिमात्रस्य सहस्रारपद्मात् सुषुम्नामार्गेण निरवच्छिन्नभावेनामृतबिन्दोरहर्निशक्षरणे आस्थामाधाय स वक्ति यत्—"द्रुतं श्लोकमृचं वोच्चारयति वक्तरि नाडिकाया यस्या नव पानीयपलानि स्रवन्ति, तस्या एव मध्यमायां वृत्तौ द्वादशपलानि स्रवन्ति। नवानां त्रिभागास्त्रीणि पलानि, तदधिकानि नव द्वादश संपद्यन्ते। विलम्बितायां तु वृत्तौ षोड़श-पलानि स्रवन्ति"—(प्रदीपव्याख्या १/१/७० सूत्रस्थ) इति।

अनेन प्रकारेण विविधानां कालमात्राणां विविधवायुपरिमाणानां चोपयोगे सत्यपि वर्णोत्पत्तये वृत्तेर्न काऽप्युपयोगिता, उत्पन्नस्य वर्णस्योच्चारयितुरुच्चारणेन्द्रिये विविधसमय यावद् धारणं श्रोतुश्च श्रवणेन्द्रिये विविधसमयं यावच्छ्रवणसपादनमेव तासां कार्यम्। वर्णोत्पत्तये ह्यन्यो ध्वनिः, उच्चारणधारार्थं चान्यो ध्वनिः। प्रथमः खलु प्राकृतः, द्वितीयस्तु वैकृतः। प्राकृतध्वनिभिर्वर्णाः सूक्ष्मकालेनाभिव्यज्यन्त इति ते तावत्-कालपर्यन्तं श्रवणयोग्या न भवन्ति, यावत् प्राकृतध्वनिकार्यसमाप्त्य-नन्तरं वैकृतध्वनिभिस्ते कियत्कालमुच्चारणेन्द्रिये न धार्यन्ते। उच्चारयिता यथेच्छति, तथैवोच्चारणधारा द्रुता मध्या विलम्बिता वा भवति, श्रोत्रा च तादृशमुपलभ्यते। अत्रेदं ज्ञातव्यं यत्, मध्यविलम्बितयोर्वृत्त्योर्वर्णानां पौनःपुनिक्युपलब्धिर्जायमानाऽपि धाराबद्धतया न तथा प्रतीयते। अत्र पौनःपुनिकोपलब्धियोगादेकाधिकवर्णोच्चारणकल्पना न कर्त्तव्या, वैकृत-ध्वनिर्ह्युपलब्धेः कालतारतम्यं संपादयितुमीष्टे, न पुनरुपलभ्यमानस्य वर्णस्य कालभेदं विधातुम्। इदं तथ्यं सदृष्टान्तमेवं वर्णितं कैयटेन—"तद् यथा घटः पुनः पुनर्दृश्यमानोऽपि न भेदमवलम्बते, तथा विलम्बितायां वृत्तावकार एव पुनः पुनरुपलभ्यत इति वृत्तिभेदेऽपि वर्णस्य भेदो न गृह्यत इति सर्ववृत्तिषु तत्कालत्वम्। ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्ना भिन्नैर्ध्वनिभिर्व्यज्यन्त इति तेषां कालभेदः। × × × यथा प्रयत्नवशादुत्पन्नो भेरीशब्दः कश्चिदल्पकालमुपलभ्यते, कश्चित् चिरं कश्चित् चिरतरं च एवं वृत्तिषूपलब्धीनां कालभेदो विषयस्य त्वभेद एव"—प्रदीप व्याख्या (१/१/७० सूत्रस्थ) इति।

महाभाष्येऽपि लिखितं यत्—"अवस्थिता वर्णा द्रुतमध्यमविलम्बितासु। × × × वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते। वक्तैव कश्चिदाश्वभिधायी भवति, आशु वर्णानभिधत्ते, कश्चिच्चिरेण कश्चिच्चिरतरेण, तद् यथा तमेवाध्वानं कश्चिच्चिरेण गच्छति, कश्चिदाशु

गच्छति, कश्चिच्चिरतरेण गच्छति । रथिक आशु गच्छत्याश्विकश्चिरेण, पदातिश्चिरतरेण" (१/१/७० सूत्रस्थ) इति ।

इत्थं वायोर्वेगाख्यगुणानुसारं वर्णानामल्पप्राणमहाप्राणत्वे भवतः, परिमाणाख्यगुणानुसारमभ्युदात्तानुदात्तस्वरितत्वानि ह्रस्वदीर्घ-प्लुतत्वानि च सिध्यन्ति । एतौ च गुणौ "...... नाभिप्रदेशात् प्रेरकयत्न एव कश्चिद् विलक्षणोऽल्पवायुं प्रेरयति, कश्चिदधिकम्......" (१/१/९ सूत्रस्थ) इत्युद्द्योते नागेशोक्तरीत्या फुप्फुसात् पूर्ववर्तिनः पश्यन्तीवाक्केन्द्रान्नाभेः परावाक्केन्द्रान्मूलाधाराद्वोदेतां न वा, परन्तु मध्यमावाक्केन्द्रगतात् फुप्फुसादेतयोरुदये न केषामपि विप्रतिपत्तिः ।

## (ग) स्वरयन्त्रस्य संकोचप्रसारजनितं वायोः सबाध-निर्बाध-निर्गमनम्

अथ वायोः कर्माणि विविच्यन्ते । विविध-वर्णोच्चारणप्रवृत्ता-वुच्चारयितुर्वैखरीक्षेत्रेऽवस्थितः स्वरयन्त्रमार्गः स्वयं विस्तीर्यते, संकुचति वा । शरीरोत्थितो वायुर्विस्तृतमार्गेण निर्गच्छञ्छ्वासरूपं धत्ते, संकु-चितमार्गेण च निर्गच्छन् नादरूपं धत्ते । तथा च ऋक्प्रातिशाख्यम्—

"प्राणो वायुः कोष्ठ्यमनुप्रदानं मुखस्य खे विवृते संवृते वा ।
आपद्यते श्वासतां नादतां वा वक्त्रीहायाम्—" (१३/१) इति ।

अत्रायमाशयः—आकृतिप्रकृतिदृष्ट्या फुप्फुसो भस्त्रासमः । वायु-र्नासिकाविवराच्छ्वासनालिकाद्वारेणास्मिन् हृद्यन्त्रे प्रविशति, ततो निर्गच्छति च । श्वासनालिकाया उभयोः पार्श्वयोः सूक्ष्मतन्त्रीसमूहौ परस्परं सम्मुखीनौ तिष्ठतः । एतौ स्वरयन्त्रम् इत्याख्यायते ( चित्रम् १) क च ट त प ख छ ठ थ फ श षसानामुच्चारणवेलायामुभयपार्श्वगताः स्वरतन्त्र्यो निस्पन्दास्तिष्ठन्तीति श्वासमार्गो विस्तृतो भवति, तेन

वायुः श्वासरूपेण निर्गच्छति। श्वासवायुकृतो ध्वनिरघोष (voiceless) इति नामितः। पूर्वोक्तवर्णा वायुमार्गस्य विवाराद् विवाराः, वायोः श्वासरूपदृष्ट्या श्वासाः श्वासिन इति वा, वायुकृताघोषध्वनेश्चाघोषा इत्युच्यन्ते।

अन्येषां वर्णानामुच्चारणे स्वरतन्त्रीसमूहौ परस्परं निकटवर्त्तिनौ भवतः। तेन प्रश्वासमार्गः सङ्कुचति। तस्मिन् संकुचितमार्गे प्रवहन् वायुः स्वरतन्त्रीराहत्य कम्पनं सृजति। कम्पनेन श्वासो विकृतः सन् नादरूपं धत्ते, नादवायुना घोष (voiced) ध्वनिः सृज्यते। तस्मादेते वर्णा वायुमार्गस्य संवारात् संवाराः, स्वरतन्त्रीकम्पनजन्यनादान्नादा नादिन इति वा, नादवायुजन्यघोषध्वनेश्च घोषाः सघोषा इति वोच्यन्ते। तथा च सिद्धान्तकौमुदी—

"खयां यमाः खयः ≍क≍पौ विसर्गः शर एव च
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते।
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः"
(८/२/१ सूत्रस्थ) इति।

अत्र श्वासानुप्रदाना इत्यत्र श्वासवायुमनु प्रदानं येषामित्यर्थः। अनुप्रदानशब्दो बाह्यप्रयत्नार्थे प्रयुज्यते। नादभागिन इत्यत्र नादवायुं ये भजन्तीत्यर्थो भवति। केचिदनुप्रदानमित्यस्य घण्टानिर्ह्लादसदृशमनुरणनं परिकल्प्य श्वासनादशब्दाभ्यां तादृशस्यानुस्वानस्य परामर्श इति वदन्ति। यथा—आपिशलिशिक्षायाम्—"तौ श्वासनादावनुप्रदानमित्याचक्षते। अन्ये तु ब्रुवते—अनुप्रदानमनुस्वानो घण्टानिर्ह्लादवत्" (८/११,१२) इति। परं तु कम्पनजन्यनादध्वनेरेवानुरणनसामर्थ्याच्छ्वासवर्णेषु तदभावान्नायमर्थः साधीयान् प्रतिभाति।

श्वासतारतम्यदृष्ट्या पाणिनीयशिक्षायां श-ष-साः क-च-ट-त-पाश्चेषच्छ्वासा अभिहिताः। नादतारतम्यदृष्ट्या च य-र-ल-वा ग-ज-ड-द-बाश्चेषन्नादा अभिहिताः। यथा "ईषच्छ्वासांश्चरो विद्यात्, ईषन्नादा यणो जश्च" (श्लो. ४०,३८) इति। केचित्तु स्वरान् नादवर्णान् स्वीकुर्वन्तोऽपि तेषां घोषत्वे विप्रतिपद्यन्ते। अन्यथा 'नादो घोषवत्सु' इत्येतावता लेखेन स्वराणामपि नादत्वे सिद्धेऽथर्वप्रातिशाख्यसूत्रे "नादो घोषवत्स्वरेषु" (१/१३) इति, ऋक्प्रातिशाख्यसूत्रे च "सर्वोपधेषु स्वरघोषवत्परः" (४/६) इति स्वरशब्दस्य पृथक् प्रदानं व्यर्थं स्यात्। प्रदीपव्याख्यायां तु 'द्वयोरकारयोर्घोषवतोर्मध्ये—'इत्युक्त्याऽकारस्य घोषवर्णत्वमभिधाय (१/४/१०९ सूत्रस्थ) स्वराणामपि घोषवर्णत्वं सूचितम्।

ध्वनिमार्गस्य संकोचविस्तारयोर्मध्यवर्तिनी स्थितिं "मध्ये हकारः" (२/६) इति सूत्रेण 'हकार' इति नामितां कृत्वा तैत्तिरीयप्रातिशाख्यं "हकारो हचतुर्थेषु" (२/६) इति सूत्रे हघझढधभेषु तादृशहकारस्थितिं वक्ति। ऋक्प्रातिशाख्ये तादृशस्वतन्त्रनामकरणाभावेऽपि "सोष्मोष्मणां घोषिणां श्वासनादौ" (१३/६) इति श्वासनादयोर्मिश्रणात्मको यत्नः प्रतिपादितः। अन्ये त्वेतादृशविलक्षणतामस्वीकुर्वन्तो नादमध्य एवैतानन्तर्भावयन्ति। हः स्वराश्च घोषाघोषविलक्षणा इति च्छन्दोभाषा। यथा—"नापि हकारो घोषवान् स्यात्, नाप्यघोष इति। तथा व्यञ्जनशेषः। तथा स्वरा नापि घोषवन्तो नाप्यघोषाः" (तै. प्रा. १/१४स्थ) इति।

## (घ) अधिजिह्वया नियन्त्रितं वायोर्निःसरणम्

१५—वैखरीवायोः क्षेत्रे मुखनासिकाविवरयोः संधिस्थलेऽधिजिह्वायाः (uvula) स्थानम्। इयं कोमलतालुनोऽंशरूपेण गृहीता। प्रकृत्या शिथिलावस्थेयं मुखविवरमाच्छादयन्ती नासिकाविवरमुन्मुक्तं

विदधाति । तेन सर्वदा नासारन्ध्रमार्गेण निःश्वासप्रश्वासौ गतागतं कुरुतः । ईदृश्यामवस्थायामुच्चारयितुश्चेष्टायां केवलमनुस्वार उच्चार्यते ।

अर्धशिथिलावस्थायामधिजिह्वायां यदा मुखविवरे नासिकाविवरे च वायुर्युगपत् प्रवेशं लभते, तदाऽनुनासिकवर्णा उत्पद्यन्ते । ते च ङञणनमा यँ-वँ-लँ । अँ-इँ-उँ इत्यादयश्च । भट्टोजीदीक्षितकृते शब्दकौस्तुभ एतद्विषये मतत्रयमस्ति । यथा—"अनुनासिकविषये तु दर्शनत्रयम्—कृत्स्नो वर्णो मुखेन नासिकया चोच्चार्यत इत्येकम्, पूर्वो भागो मुखेन परो नासिकयेति द्वितीयम्, तद्वैपरीत्यात्तृतीयम् । द्वितीय-तृतीययोर्भागमात्रस्य नासिक्यत्वेऽपि तदुपरागाद् भागान्तरमपि तद्वदवभासते" (१/१/४, पृ. ११४) इति ।

चतुर्थमपि मतं कैयटेन लिखितम् । एतन्मतानुसारं नैव मुखं नापि नासिकाऽनुनासिकस्योच्चारणस्थानम्, अपितु मुखनासिकासंधिस्थलमेवेति । अयमर्थः "मुखोपसंहिता वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः" इति महाभाष्यप्रतीकस्य (१/१/८ सूत्रस्थ) व्याख्यानावसरे प्रदीपव्याख्यायां प्रकाशितः । एषु द्वितीय-तृतीय-चतुर्थमतानि भाषाशास्त्रे नादरमधिगच्छन्ति, युगपन्मुखनासिकामार्गेण वायुनिर्गमनवेलायामेवानुनासिकानामुच्चार्यमाणत्वात् । प्रथममतं तु साध्विति प्रतिभाति ।

उत्तानावस्थाऽधिजिह्वायास्तृतीयावस्था भवति । अस्यां नासिकाविवरं पूर्णतया रुद्धं भवति, वायुप्रवाहश्च केवलं मुखविवरमार्गेण निर्गच्छति । अस्यामेवावस्थायामननुनासिका उच्चार्यन्ते ।

एतावत्पर्यन्तं वायुवेगः, वायुपरिमाणम्, स्वरयन्त्रमार्गस्य संकोचप्रसारजनितं वायोः सबाधनिर्बाधनिर्गमनम्, अधिजिह्वया नियमितं

वायोर्निःसरणम्—इति चतुर्ष्वपशीर्षकेषु वायोर्यद्गुणद्वयमेकं कर्म चेति त्रीणि विवेचितानि, तानि बाह्यप्रयत्नानां परिणामाः।

## (क, ख, ग, घ) बाह्यप्रयत्नस्य प्रकाराः

"बाह्यप्रयत्नस्त्वेकादशधा—विवारः संवारः, श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति" इति सिद्धान्तकौमुदी (१/१/९ सूत्रस्थ)।

कालो विवारसंवारौ श्वासनादावघोषता।
"घोषाऽल्पप्राणता चैव महाप्राणः स्वरास्त्रयः।
बाह्यं करणमाहुस्तान् वर्णानां वर्णवेदिनः" (८/२३,२७)—

इत्यापिशलशिक्षा कालमपि बाह्यप्रयत्नमध्ये गणयति। तेन कालभेदनिबन्धना ह्रस्वदीर्घप्लुतास्त्रयो बाह्यप्रयत्ना अधिकाः। तैत्तिरीयप्रातिशाख्ये हकारप्रयत्नोऽपि लिखितः। पाणिनीयशिक्षेषन्नादेषच्छ्वासप्रयत्नौ कथयति। "इदं ह्रस्वत्वादेरानुनासिक्यस्य चोपलक्षणम्" (सञ्ज्ञाप्रकरण पृ. ३५) इति लघुशब्देन्दुशेखरे नागेशोऽनुनासिकमपि बाह्यप्रयत्नं मनुते। एवमष्टादश बाह्यप्रयत्नाः। (१) उदात्तः (२) अनुदात्तः (३) स्वरितः (४) ह्रस्वः (५) दीर्घः (६) प्लुतः (७) अनुनासिकः (८) अल्पप्राणः (९) महाप्राणः (१०) श्वासः (११) ईषच्छ्वासः (१२) अघोषः (१३) विवारः (१४) घोषः (१५) नादः (१६) ईषन्नादः (१७) संवारः (१८) हकारश्चेति।

इयमष्टादशसंख्या विविधमतानां संकलनेनायाति, न तु कस्याप्येकस्य मतेन। उदात्तादयो ह्रस्वादयोऽनुनासिकश्चेत्येते सर्वसम्मता अपि कैश्चिद् बाह्यप्रयत्नमध्ये न गण्यन्ते। किं च केषांचिद्वर्णानां केषुचिद् बाह्यप्रयत्नेषु न्यायतः सिद्धेष्वपि प्रयोगक्षेत्रे कैश्चित्तदभावो निरूपितः। एतत्सकलप्रदर्शकं कोष्ठकमत्र प्रदीयते।

कोष्ठकप्रदत्ताः संख्याः सूचयन्ति—(१) वक्ष्यमाणतत्तद्ग्रन्थमतम् (२) तदन्यग्रन्थानामनभिमतं वौदासीन्यं वा। '✓' इति चिह्नं तत्तदाभ्यन्तरप्रयत्न एतत्सकलग्रन्थसम्मति सूचकम्, '—' इति चिह्नं च तन्निषेधस्य तद्विषय औदासीन्यस्य वा प्रदर्शकम । तत्तद्बाह्यप्रयत्ननिरूपणावसर एभ्यो ग्रन्थेभ्यः कानिचिन् प्रमाणान्युद्धृतानि । अनुद्धृतानि प्रमाणानि त्वत्र यथासंख्यं प्रदीयन्ते । बाह्यप्रयत्नमध्ये कैश्चित् परिगणिता अपि ये सर्वसम्मता उदात्तादयः स्वराः, ह्रस्वादयः कालमात्रिका, अनुनासिकाश्चेति वर्त्तन्ते, तेषां विषये तत्तद्विशेषाणामेव प्रमाणानि प्रदर्श्यन्ते ।

१—ऋक्प्रातिशाख्यम्—

अन्त्याः सप्त तेषामघोषाः (१/१२)
वर्गे वर्गे च प्रथमावघोषौ
युग्मौ सोष्माणावनुनासिकोऽन्त्यः (१/१३)
श्वासोऽघोषाणामितरेषां तु नादः
सोष्मोष्मणां घोषिणां श्वासनादौ (१३/२)

२—शुक्लयजुःप्रातिशाख्यम्—

द्वे करणे (१/११) ("संवृतविवृताख्ये वायोर्भवतः" इति तत्रत्यमुव्वटभाष्यम्)।

३—तैत्तिरीयप्रातिशाख्यम्—

ऊष्मविसर्जनीयप्रथमद्वितीया अघोषाः । न हकारः । व्यञ्जनशेषो घोषवान् (१/१२-१४) संवृते कण्ठे नादः क्रियते, विवृते श्वासः (२/४,६) नादोऽनुप्रदानं स्वरघोषवत्सु । अघोषेषु श्वासः । भूयान् प्रथमेभ्योऽन्येषु (२/८,१०,११) ।

४—ऋक्तन्त्रम्—

संवृतो घोषवान् । विवृतोऽघोषो नादानुप्रदानाः स्वरघोषवन्तः । श्वासोऽघोषाणाम् । तनीयान् प्रथमानामुभौ ह्चतुर्थानाम् । संनिवेशोऽन्यः । × × × हकारस्तु घोषवतामघोषाणां सोष्मणामूष्मणां च (१/३,४) उत्तमा घोषाः, हान्तस्थाः, युग्माः सोष्माणः (२/२/४-६) ।

५—अथर्वप्रातिशाख्यम्—

श्वासोऽघोषेष्वनुप्रदानः । नादो घोषवत्स्वरेषु (१/१२,१३) ।

६—पाणिनीय शिक्षा—

ऌकारः लुत एव च (श्लो. ५)
अमोऽनुनासिका न ह्रौ नादिनो हझषः स्मृताः ।
ईषन्नादा यणजशश्च श्वासिनस्तु खफादयः । (श्लो. ३६)
ईषच्छ्वासांश्चरो विद्यात् । (श्लो. ४०)

७—याज्ञवल्क्य शिक्षा—

वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः । घोषास्त्वन्ये । संवृता घोषाः, विवृता अघोषाः । विंशतिर्घोषास्ते गजडदबा-घभढधभा-ङञणनमा हयरलवाश्चेति । त्रयोदशाघोषास्ते कचटतपाः-खछठथफाः-शषसाश्चेति (पृ. ३२) ।

८—आपिशलिशिक्षा—

ऌवर्णस्य दीर्घा न सन्ति । तं द्वादशप्रभेदमाचक्षते । यदृच्छाऽशक्तिजानुकरणा वा यदा दीर्घाः स्युस्तदा तमप्यष्टादशप्रभेदं ब्रुवते ।

सन्ध्यक्षराणां ह्रस्वा न सन्ति । तान्यपि द्वादशप्रभेदानि । छन्दोगानां सात्यमुग्रिराणायनीया ह्रस्वानिपठन्ति । (तेषाम?) तान्यप्यष्टादशप्रभेदानि (६/४-१०) ।

वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषाः। वर्गयमानां प्रथमा अल्पप्राणा इतरे सर्वे महाप्राणाः। वर्गाणां तृतीयचतुर्थाः अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च। वर्गयमानां तृतीया अन्तस्थाश्चाल्पप्राणा इतरे सर्वे महाप्राणाः। यथा तृतीयास्तथा पञ्चमाः। आनुनासिक्यमेषामधिको गुणः (४/२-७)।

९—सिद्धान्तकौमुदी—

लृवर्णस्य द्वादश, तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात्।

१०—लघुशब्देन्दुशेखरः—

न ह्रावित्युपलक्षणमैचः सर्वस्य प्लुतलृकारस्य चानुनासिकस्यादर्शनात् (संज्ञाप्रकरण पृ. ३५)।

बाह्यप्रयत्नसूच्यां ये द्विचत्वारिंशद्वर्णाः प्रदत्तास्त एव सर्वसम्मताः संस्कृतवर्णाः। विविधमतानुसारमितोऽप्यधिका वर्णा वैदिकलौकिकसंस्कृतयोर्व्यवह्रियन्ते; किन्तु न ते सर्वसम्मता इति पञ्चमपरिच्छेदे सप्रपञ्चं दर्शयिष्यते।

द्विचत्वारिंशत्संख्याकैरेभिरेव वर्णैर्माहेश्वरसूत्रस्था वर्णमाला सारदातिलकोक्ता भूतलिपिवर्णमाला च संघटिते भवतः। माहेश्वरसूत्राणि यथा—(१) अइउ(ण्) (२) ऋलृ(क्) (३) एओ(ङ्) (४) ऐऔ(च्) (५) हयवर(ट्) (६) ल(ण्) (७) ञमङणन(म्) (८) झभ(ञ्) (९) घढध(ष्) (१०) जबगडद(श्) (११) खफछठथचटत(व्) (१२) कप(य्) (१३) शषस(र्) (१४) ह(ल्) इति। बन्धनीमध्यगतानां वर्णानां

वर्णमालया न कोऽपि संबन्धः। व्याकरणीयस्वतन्त्रोद्देश्यसिद्ध्यै सूत्राणामन्तेष्वेते विन्यस्ताः। एवमेकाधिकहविन्यासः। एतानि सूत्राण्याधारीकृत्य पाणिनिरष्टाध्यायीं रचितवान्।

इयमेव वर्णमाला प्रथमं पञ्चभ्यो महाभूतेभ्य उत्पन्नत्वाद् भूतलिपिनाम्ना सारदातिलके व्यपदिष्टा। यथा—

"अथ भूतलिपिं वक्ष्ये सुगोप्यमतिदुर्लभम्।
यं प्राप्य शम्भोर्मुनयः सर्वकामान् प्रपेदिरे।
पञ्च ह्रस्वाः❋ संधिवर्णा† व्योमेराग्निर्जलं धरा
अन्त्यमाद्यं द्वितीयं च चतुर्थं मध्यमं क्रमात्
पञ्च वर्गाक्षराणि† स्युर्वान्त✻-श्वेते❀-न्दु★भिः सह।
एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः" (७/१-३) इति।

(❋) अइउऋऌ (†) एऐओऔ (†) ङकखघग-ञचछझज-णटठढड-नतथधद-मपफभब (✻) यरलव (❀) शषस (★) ह—इति तन्त्रशास्त्रीयसंकेतितार्था वर्णक्रमश्च।

---

# चतुर्थः परिच्छेदः

## आभ्यन्तरप्रयत्नाः

### १५। आभ्यन्तरप्रयत्ने—

### (घ-१) जिह्वौष्ठनियमितं वायोर्निःसरणम्

वायोर्गुणकर्मपरिसंख्याने 'घ' इति वर्णगणनक्रमेण पूर्वपरिच्छेदे प्रदत्तं वायोर्द्वितीयं कर्म "अधिजिह्वानियमितं जिह्वौष्ठनियमितं वा वायोर्निःसरणमिति । अत्र द्वावंशौ । अधिजिह्वानियमितं वायोर्निःसरणमित्यंशस्य विवेचनं बाह्यप्रयत्नपरिसरे परापततीति पूर्वस्मिन्नेव परिच्छेदे परिसमापितम् । "जिह्वौष्ठनियमितं वायोर्निःसरणम्" इत्यंशस्य विवेचनं त्वाभ्यन्तरप्रयत्नाधिकारगतमिति संप्रत्यस्मिन् परिच्छेदे तद् विविच्यते। इत्थं वायोर्द्वितीयकर्मणो द्वावंशौ पृथक्परिच्छेदद्वये यथास्थानं घ, घ-१ इति सङ्केतदानपूर्वकं सन्निवेशितौ ।

अधिजिह्वामतिक्रम्य निर्गच्छन् वायुर्मुखविवराभ्यन्तरं प्रविशति । तत्राभ्यन्तरप्रयत्नवशाजिह्वयौष्ठेन च तस्य विविधं नियमनं भवति । ओष्ठ्यव्यञ्जनोच्चारणकाल ओष्ठद्वयं संलग्नं सन् क्षणं वायुप्रवाहमवरुणद्धि । ओष्ठ्यस्वरवर्णोच्चारणकाले त्वोष्ठद्वयस्य मध्यमसंलग्नं तिष्ठति । तेनौष्ठद्वयं वर्तुलाकारं धारयति । फलतो वायुमार्गः संकीर्ण एव भवति, नतु रुद्धः । ओष्ठ्येतरस्वरोच्चारणवेलायां तु यथापूर्वमोष्ठवजिह्वा किमप्युच्चारणस्थानमस्पृशन्तीतद्दिशि केवलमुन्मुखीभवति । तदितराणामन्तस्थोष्मस्पर्शवर्णानामुच्चारणे जिह्वा तत्तदुच्चारणस्थानं यथाक्रममीषदर्धं पूर्णं च स्पृशति । जिह्वाया ओष्ठस्य च स्पर्शोन्मुखता विविधः स्पर्शो वा मुखविवरं विविधाकारं विदधाति वायुं नियमयति च । तेन विविधा वर्णा उत्पद्यन्ते ।

## (१) उच्चारणस्थानम्

यस्मात् स्थानाद् वर्णमुच्चार्यते, तदुच्चारणस्थानं (place of articulation) स्थानं वोच्यते। Critical Studies in the Phonetic Observations धृतायां[1] चारायणीयशिक्षायां स्थानं दशविधं निगदितम्। यथा—

"दश स्थानानि वर्णानां कीर्तयन्ति मनीषिणः
यतः प्रवृत्तिर्भूतानां तानि मे गदतः शृणु ।
(१) उरः (२) कण्ठः (३) शिरस् (४) तालु
(५) दन्ता (६) औष्ठौ च (७) नासिका
(८) जिह्वामूलं तु (९) सृ (कश्च?) क्क च
(१०) दन्तमूल-(स्त?) न्तथैव च" इति ।

उरस्यत्वेन शास्त्रेषु निरूपितं विसर्गं हवर्णं च Phonetics in Ancient India ग्रन्थे फुफ्फुसादुच्चार्यमाणं वदन्[2] W. S. Allen महोदयः उरःपदेन फुफ्फुसाख्यं हृद्यन्त्रं गृह्णाति । भोलानाथतिवारी-महोदयस्तु उरःशब्दं काकलकार्थकमनुते[3] भाषाविज्ञानग्रन्थे। उरःपदस्य फुफ्फुसार्थकत्वे तस्य महाभाष्यप्रदत्तमुखविवरसीम्नोऽधोवर्तित्वादाभ्यन्तरप्रयत्नाभावप्रसङ्ग इति विमर्शनीयम् । कण्ठशब्द आधुनिकविज्ञाने श्लक्ष्णतालुरूपेण विदितः, तालुशब्दश्च कठोरतालुरूपेण। अर्थप्रसारवशतः कण्ठशब्देन काकलकस्यापि ग्रहणात् काकलकादुच्चार्यमाणोऽप्यकारः परवर्ति-ग्रन्थेषु कण्ठ्यरूपेण व्यपदिष्ट इति। Phonetics in Ancient

---

1. (Foot note p. 37).

2. "Thus the first organs to be considered are the lungs which are treated as the place of articulation for the voiced h and voiceless h" (part II, Section 200, p. 48).

3. (Section 7, p. 345)

India ग्रन्थे W. S. Allen महोदयः[4] । अनयैव युक्त्या फुप्फुसार्थेऽपि कण्ठशब्दस्य प्रयोगः संभाव्यते । तेन 'ह'स्य फुप्फुसादुच्चार्यमाणत्वपक्षे 'कण्ठ्यावहौ-' (श्लो. १७) इति पाणिनीयशिक्षा न विरुध्यते । शिरः-शब्दस्य मूर्धाऽर्थः । स चात्र मस्तको न, परंतु मुखविवरवत्युच्चारण-स्थानम् । तत्रापि कैश्चित् कण्ठतालुमध्यवर्तिस्थानं मूर्धशब्देन गृहीतम् । अन्यैस्तु दन्ततालुमध्यवर्तिस्थानमित्यनुशीलनाज् ज्ञायते । उच्चारणस्थान-करणनिरूपणसापेक्षोऽयं विषयः परस्तादेव विमृश्यते ।

जिह्वामूलशब्देन संस्कृतग्रन्थेषु कुत्रचिदङ्गिम्या जिह्वाया मूलाङ्गभूता पश्चाज्जिह्वा (back of the tongue) गृह्यते, कुत्रचिच्च पश्चाज्जिह्वानिकट-वर्त्तिनी तदितरेन्द्रियरूपाऽधिजिह्वा (uvula) गृह्यत इति संभाव्यते ; नतु जिह्वाया मूलम् (root of the tongue), तेन कस्यापि भारतीयवर्णस्योच्चारणाभावात् । उच्चारणौचित्यदृष्ट्या भाषाशास्त्रे सृक्शब्द ओष्ठाभ्यन्तरभागस्य वाचकः । 'सृक्' इत्यस्यापरं नाम ।

वर्त्सं वर्स्वं वा कैश्चित् स्थानान्तररूपेण स्वीकृतम् । "वर्त्सशब्देन दन्तमूलादुपरिष्टादुच्छूनः प्रदेश उच्यते" इति ऋक्प्रातिशाख्यस्योव्वट-भाष्यम् (१/२० सूत्रस्थ) । किन्तु दन्ते दन्तमूले वाऽस्यान्तर्भावो बहुभिः कृतः ।

काकलकादध उपजत्रुनामकमुच्चारणस्थानं कैश्चित् स्वीकृतम् । तेन महाभाष्ये अकारस्योच्चारणस्थानमुपजत्रु मुखगह्वरसीम्नो बहिर्वर्तत इति तद् बाह्यं भवेदित्याशङ्कितम् । यथा—"बाह्यं ह्यास्यात् स्थानमवर्णस्य"

---

4. 'With regard to अ, it remains only to mention that in later treatises, owing to the extension of the term कण्ठ्य अ (like ह and विसर्ग) is grouped with the velar series"—(part. 2, Section. 2. 10, p. 61)

(१/१/६ सूत्रस्थ)" इति । काकलकस्याधस्तादुपजत्रुस्थानमवर्णस्यैक इच्छन्ति" इति तत्रत्या कैयटकृतप्रदीपव्याख्याऽप्यमुमेवार्थमुपोद्बलयति । एतेन मुखविवराद्बहिरकारोच्चारणे सति बाह्यप्रयत्नेनैव तस्योच्चारणं संपाद्यत्र, नतु मुखविवराभ्यन्तरप्रयत्नेनेति भाष्यकृताया आशङ्काया अभिप्रायः । अत्र कण्ठपिटकापरपर्यायं स्वरयन्त्रमेवोपजत्रुशब्देनाभिप्रेतमित्यनुमीयते ।

भूयांसो वर्णाः केवलमेकैकोच्चारणस्थानादुच्चार्यन्ते । अननुनासिकेषु ए ऐ-ओ-औ-व इति वर्णपञ्चकं प्रत्येकं स्थानद्वयादुच्चार्यते । अनुनासिकेषु ङञणनमेषु प्रत्येकं मुखविवरवर्तितत्तत्स्थानान्नासिकायाश्चेति स्थानद्वयादुच्चार्यते । अँ-इँ-उँ इत्यादीनामनुनासिकस्वराणां यँ-वँ-लँ इत्यनुनासिकव्यञ्जनत्रयस्य चोच्चारणवेलायां वायोर्मुख्यतो मुखमार्गेण निर्गमनान्मुखविवरवर्तीनि तत्तत्स्थानान्येवैषामुच्चारणस्थानानि, न तु नासिका, तद्द्वारेण निर्गच्छतो वायुप्रवाहस्यापेक्षिकाल्पत्वात् । नासिका तु तांस्तान् वर्णाननुनासिकीकृत्य तेषां गुणविशेषमेवापादयति, न तु वर्णभेदं कर्तुं शक्नोतीति (१/१/१ सूत्रस्थ) महाभाष्ये प्रतिपादितम् । प्रकारान्तरेण कथने तु—आनुनासिक्यं तद्धर्मविशिष्टस्य वर्णस्य धर्मभेदमेव संपादयति, न तु धर्मिभेदम् । धर्मभेदेन धर्मी न भिद्यत इति विषये महाभाष्यस्य तत्रत्यमुदाहरणमतीव मनोरमम् । यथा—"तद् यथा देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वामाख्यां न जहाति" इति । साम्प्रतमुच्चारणोपयोगिनोऽवयवाश्चित्रे प्रदर्श्यन्ते ।

## चित्रम् - १ वाग्यन्त्रम्



# उच्चारणावयवानां पर्यायाः

ओष्ठौ = lips
सृक = सृक्कम्, सृक् = inside penaltimate edge of lips
दन्ताः = teeth
दन्तमूलम् }
वर्त्स्वम् = वत्संम् } = alveola
अग्रमूर्धा = front cerebrum
तालु—कठोरतालु = hard palate
पश्चान्मूर्धा = back cerebrum
कण्ठः १—हनुमूलम्, श्लक्ष्णतालु = guttur, velum, soft palate
अधिजिह्वा—जिह्वामूलम् १, शुण्डिका = uvula
निम्नजिह्वोपाग्रम् = bottom of the tongue
जिह्वाग्रम्—जिह्वाया धारा = blade or tip of the tongue
अग्रजिह्वा—ऊर्ध्वजिह्वोपाग्रम् = front of the tongue
मध्यजिह्वा—जिह्वामध्यम् = middle of the tongue
पश्चाज्जिह्वा—जिह्वामूलम् २ = back of the tongue
काकलकम्—कण्ठः २, उरः १, स्वरयन्त्रमुखम्, ध्वनियन्त्रमुखम् = glottis
स्वरयन्त्रम्, ध्वनियन्त्रम्, कण्ठपिटकः, उपजत्रु = Larynx, Adam's apple
फुप्फुसः—कण्ठः ३, उरः २ = lungs, chest
नासिका = nose

अत्र केषुचिच्छब्देषु दत्ता संख्या तत्तच्छब्दानां विविधार्थे व्यवहारं सूचयति। यथा—कण्ठः १, कण्ठः २, कण्ठः ३ इत्येतैः कण्ठशब्दस्यार्थत्रये व्यवहारः सूच्यते। एवं जिह्वामूलशब्दस्योरःशब्दस्य च।

अधुना संस्कृतवर्णानामुच्चारणस्थानप्रदर्शिका सूची कतिपयमनीषिमतप्रदर्शनपुरःसरमुपस्थाप्यते। तत्र यन्मतं ग्रन्थस्य मतं न, अपि तु संकलितं मतान्तरम्, तस्य सूचना (सं. म.) इति बन्धनीबद्धाक्षरद्वयेन प्रदीयते।

अत्र प्रमाणानि यथासंख्यं दीयन्ते ।

१—ऋक् प्रातिशाख्यम्—

कण्ठ्योऽकारः प्रथमपञ्चमौ च
द्वाऊष्मणां केचिदेता उरस्यौ ।
ऋकारल्कारावथषष्ठ ऊष्मा
जिह्वामूलीयाः प्रथमश्च वर्गः ।
तालव्यावेकारचकारवर्गा-
विकारैकारौ यकारः शकारः ।
मूर्धन्यौ षकारटकारवर्गौ
दन्तमूलीयस्तु तकारवर्गः ।
सकाररेफलकाराश्च रेफं
वर्त्स्यमेके शेष ओष्ठ्योऽपवाद्य ।
नासिक्यान् नासिक्ययमानुस्वारान् ।
जिह्वामूलं तालु चाचार्य आह
स्थानं ङकारस्य तु वेदमित्रः । (१/१८-२१)

२—शुक्ल यजुः प्रातिशाख्यम्—

ऋ≍कौजिह्वामूले ।
इचशेयास्तालौ ।
षटौ मूर्धनि ।
रो दन्तमूले ।
लृलसिता दन्ते ।
उवोपोपध्मा ओष्ठे ।
अहविसर्जनीयाः कण्ठे ।
(१/६५-७१)

कोष्ठ

विविधमतानुर

| वर्गः | १<br>ऋक्प्रातिशाख्यम् | २<br>शुक्लयजुः प्रातिशाख्यम् | ३<br>तैत्तिरीय प्रातिशाख्यम् | ४<br>ऋक्तन्त्रम् |
|---|---|---|---|---|
| अ | कण्ठः, उरः | कण्ठः | ओष्ठहनु | कण्ठः |
| इ | तालु | तालु | तालु | तालु |
| उ | ओष्ठः | ओष्ठः | ओष्ठः | ओष्ठः |
| ऋ | जिह्वामूलम् | जिह्वामूलम् | वर्त्सम् | जिह्वामूलम् |
| ऌ | ,, | दन्ताः | ,, | — |
| ए | तालु | तालु | तालु | तालु |
| ऐ | ,, | कण्ठतालु | ,, | — |
| ओ | ओष्ठः | ओष्ठः | ओष्ठः | ओष्ठः |
| औ | ,, | कण्ठौष्ठम् | ,, | ,, |
| क | जिह्वामूलम् | जिह्वामूलम् | हनुमूलम् | जिह्वामूलम् |
| ख | ,, | ,, | ,, | ,, |
| ग | ,, | ,, | ,, | ,, |
| घ | ,, | ,, | ,, | ,, |
| ङ | जिह्वामूलम्, नासिका | जिह्वामूलम, नासिका | हनुमूलम्, नासिका | जिह्वामूलम्, नासिका |
| च | तालु | तालु | तालु | ता |
| छ | ,, | ,, | ,, | ,, |
| ज | ,, | ,, | ,, | ,, |
| झ | ,, | ,, | ,, | ,, |
| ञ | तालु, नासिका | तालु, नासिका | तालु, नासिका | तालु, नासिका |
| ट | मूर्धा | मूर्धा | मूर्धा | मूर्धा |
| ठ | ,, | ,, | ,, | ,, |

 

## ारमुच्चारणस्थान-सूची

| ५<br>पाणिनीयशिक्षा | ६<br>याज्ञवल्क्यशिक्षा | ७<br>आपिशलशिक्षा | ८<br>शाकटायनप्रक्रिया संग्रहः | ९<br>सिद्धान्तकौमुदी |
|---|---|---|---|---|
| कण्ठः | कण्ठः | जिह्वा । सर्वमुखम् (सं. म.) | कण्ठः । सर्वमुखम् (सं. म.) | कण्ठः |
| तालु | तालु | तालु | तालु | तालु |
| ओष्ठः | ओष्ठः | ओष्ठः | ओष्ठौ | ओष्ठौ |
| मूर्धा | मूर्धा | मूर्धा | मूर्धा | मूर्धा |
| दन्ताः | दन्ताः | दन्ताः | दन्ताः | दन्ताः |
| कण्ठतालु | कण्ठतालु | कण्ठतालु | तालु । कण्ठतालु (सं. म.) | कण्ठतालु |
| ” | ” | ” | ” | ” |
| कण्ठौष्ठम् | कण्ठौष्ठम् | कण्ठौष्ठम् | ओष्ठौ । कण्ठौष्ठम (सं. म.) | कण्ठौष्ठम् |
| ” | ” | ” | ” | ” |
| जिह्वामूलम् | जिह्वामूलम् | कण्ठः । जिह्वा (सं. म.) | कण्ठः, जिह्वामूलम् | कण्ठः |
| ” | ” | ” | ” | ” |
| ” | ” | ” | ” | ” |
| ” | ” | ” | ” | ” |
| जिह्वामूलम्, नासिका | जिह्वामूलम्, नासिका | कण्ठः, नासिका । जिह्वा (सं. म.) | कण्ठः, जिह्वामूलम्, नासिका | कण्ठः, नासिका |
| तालु | तालु | तालु | तालु | तालु |
| ” | ” | ” | ” | ” |
| ” | ” | ” | ” | ” |
| ” | ” | ” | ” | ” |
| तालु, नासिका | तालु, नासिका | तालु, नासिका | तालु, नासिका | तालु, नासिका |
| मूर्धा | मूर्धा | मूर्धा | मूर्धा | मूर्धा |
| ” | ” | ” | ” | ” |

## विविधमतानुसारमुच

| | १ | २ | ३ | ४ | |
|---|---|---|---|---|---|
| वर्णः | ऋक्प्रातिशाख्यम् | शुक्लयजुः प्रातिशाख्यम् | तैत्तिरीय प्रातिशाख्यम् | ऋक्तन्त्रम् | |
| ड | मूर्धा । जिह्वामूलम् तालु, (सं. म.) | मूर्धा | मूर्धा | मूर्धा | |
| ढ | मूर्धा | ,, | ,, | ,, | |
| ण | मूर्धा, नासिका | मूर्धा, नासिका | मूर्धा, नासिका | मूर्धा, नासिका | |
| त | दन्तमूलम् | दन्ताः | दन्तमूलम् | दन्ताः | |
| थ | ,, | ,, | ,, | ,, | |
| द | ,, | ,, | ,, | ,, | |
| ध | ,, | ,, | ,, | ,, | |
| न | दन्तमूलम्, नासिका | दन्ताः, नासिका | दन्तमूलम्, नासिका | दन्ताः, नासिका | |
| प | ओष्ठः | ओष्ठः | ओष्ठः | ओष्ठः | |
| फ | ,, | ,, | ,, | ,, | |
| ब | ,, | ,, | ,, | ,, | |
| भ | ,, | ,, | ,, | ,, | |
| म | ओष्ठः, नासिका | ओष्ठः, नासिका | ओष्ठः, नासिका | ओष्ठः, नासिका | |
| य | तालु | तालु | तालु | तालु | |
| र | दन्तमूलम् । वर्त्सम् (सं. म.) | दन्तमूलम् | दन्तमूलम् | दन्ताः, दन्तमूलम् | |
| ल | दन्तमूलम् | दन्ताः | ,, | दन्ताः | |
| व | ओष्ठः | ओष्ठः | दन्ताः | ओष्ठः | |
| श | तालु | तालु | तालु | तालु | |
| ष | मूर्धा | मूर्धा | मूर्धा | मूर्धा | |
| स | दन्तमूलम् | दन्ताः | दन्तमूलम् | दन्ताः | |
| ह | कण्ठः । उरः (सं. म.) | कण्ठः | कण्ठः । परस्वरस्थानम् (सं. म.) | कण्ठः | कण्ठः (अ |

## ारणस्थान-सूची (पूर्वानुवृत्ता)

| ५ | ६ | ७ | ८ | ६ |
|---|---|---|---|---|
| पाणिनियशिक्षा | याज्ञवल्क्यशिक्षा | आपिशलशिक्षा | शाकटायनप्रक्रिया संग्रहः | सिद्धान्तकौमुदी |
| मूर्धा | मूर्धा | मूर्धा | मूर्धा | मूर्धा |
| ” | ” | ” | ” | ” |
| मूर्धा, नासिका | मूर्धा, नासिका | मूर्धा, नासिका | मूर्धा नासिका | मूर्धा, नसिका |
| दन्ताः | दन्ताः | दन्ताः | दन्ताः | दन्ताः |
| ” | ” | ” | ” | ” |
| ” | ” | ” | ” | ” |
| ” | ” | ” | ” | ” |
| दन्ताः, नासिका | दन्ताः, नासिका | दन्ताः, नासिका | दन्ताः, नासिका | दन्ताः, नासिका |
| ओष्ठः | ओष्ठः | ओष्ठः | ओष्ठौ | ओष्ठौ |
| ” | ” | ” | ” | ” |
| ” | ” | ” | ” | ” |
| ” | ” | ” | ” | ” |
| ओष्ठः नासिका | ओष्ठः, नासिका | ओष्ठः, नासिका | ओष्ठौ, नासिका | ओष्ठौ, नासिका |
| तालु | तालु | तालु | तालु | तालु |
| मूर्धा | दन्तमूलम् | मूर्धा । दन्तमूलम् (सं. म.) | मूर्धा । दन्तमूलम् (सं म.) | मूर्धा |
| दन्ताः | दन्ताः | दन्ताः | दन्ताः | दन्ताः |
| दन्तौष्ठम् | ओष्ठः | दन्तौष्ठम् । सृक्क (सं. म.) | दन्तौष्ठम् । सृक्क (सं. म.) | दन्तोष्ठम् |
| तालु | तालु | तालु | तालु | तालु |
| मूर्धा | मूर्धा | मूर्धा | मूर्धा | मूर्धा |
| दन्ताः | दन्ताः | दन्ताः | दन्ताः | दन्ताः |
| ...र्यपञ्चमान्तस्थयुक्तस्तूरस्यः) | कण्ठः, (यवपरकस्तूरस्यः) | कण्ठः । उरः (सं.म.) | कण्ठः, उरः | कण्ठः |

यमानुस्वारनासिक्यानां नासिके (१/७४) । ऐकारौकारयोः- कण्ठ्या पूर्वा मात्रा ताल्वोष्ठ्योरुत्तरा (१/७३) ।

३—तैत्तिरीय प्रातिशाख्यम्—

अवर्णे नात्युपसंहृतमोष्ठहनु नातिव्यस्तम् ।
तालौ जिह्वामध्यमिवर्णे ।
ओष्ठोपसंहार उवर्णे ।
उपसंहृततरे च जिह्वाग्रमृकारऌकारेषु वर्स्त्वेषूपसंहरति ।
एकारे च ।
स्वराणां यत्रोपसंहारस्तत् स्थानम् ।
अन्येषां तु यत्र स्पर्शनं तत् स्थानम् ।
हनुमूले जिह्वामूलेन कवर्गे स्पर्शयति ।
तालौ जिह्वामध्येन चवर्गे ।
जिह्वाग्रेण प्रतिवेष्ट्य मूर्धनि टवर्गे ।
जिह्वाग्रेण तवर्गे दन्तमूलेषु ।
ओष्ठाभ्यां पवर्गे ।
तालौ जिह्वामध्यान्ताभ्यां यकारे ।
रेफे जिह्वाग्रमध्येन प्रत्यग् दन्तमूलेभ्यः ।
दन्तमूलेषु च लकारे ।
ओष्ठान्ताभ्यां द(न्तैर्व?) न्तेषु वकारे ।
स्पर्शस्थानेषूष्माण आनुपूर्व्येण ।
कण्ठस्थानौ हकारविसर्जनीयौ ।
उदयस्वरादिसस्थानो हकार एकेषाम् ।
नासिक्या नासिकास्थानाः ।
मुखनासिक्या वा ।
(२/१२,२२,२४,१८,२३,३१,३३,३५-४४,४६,४७,४९,५०)

४—ऋक्तन्त्रम्—

ह्गाः कण्ठे ।

जिह्वामूले≍कु ।

तालुनि श्च्ये ।

मूर्धनि षटौ ।

दन्ते तृसूलाः ।

रेफो मूले वा ।

ओ (ष्ठ्ये?) ष्ठ्यो वो ≍ पू ।

(२/१/२, ४-६)

स्पर्शे वर्गस्य ।

अन्त्योऽनुनासिकः ।

(२/२/३,७)

५—पाणिनीयशिक्षा—

हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ।
उरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥
कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ।
स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥
जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
ए ऐ तु कण्ठतालव्या ओ औ कण्ठौष्ठजौ स्मृतौ ॥
(श्लो. १६-१८)

६—याज्ञवल्क्य शिक्षा—

तत्र द्वावौरस्यौ ह्न-ह्य इति । त्रयः कण्ठ्या अवर्णहकारविसर्जनीया इति । षण्मूर्धन्याः षकारो टवर्गश्चेति । नव तालव्या-इवर्णश्चवर्गशका

कारयकाराः । अष्टौ दन्त्या लृवर्णलकारसकारतवर्गा इति । अष्टावोष्ठ्या उवर्गवकारोपध्मानीयपवर्गा इति । एको दन्तमूलीयो रेफः । (पञ्च?) सप्त जिह्वामूलीया ऋ॒ऽकौ कवर्ग इति । (पृ. ३३) ।

आद्या मात्रा तु कण्ठ्यस्य एकारौकारयोर्भवेत् ।
तालव्यस्य तथौष्ठ्यस्य द्वितीया च यथाक्रमम् ॥
(श्लो. २१५)

७—आपिशलशिक्षा—

अकुहविसर्जनीयाः कण्ठ्याः ।
हविसर्जनीयावुरस्यावेकेषाम् ।
जिह्वामूलीयो जिह्व्यः ।
कवर्गावर्णानुस्वार जिह्वामूलीया जिह्व्या एकेषाम् ।
सर्वमुखस्थानमवर्णमेके ।
इचुयशास्तालव्याः ।
ऋटुरषा मूर्धन्याः ।
रो दन्तमूलस्थानमेकेषाम् ।
लृतुलसा दन्त्याः ।
वकारो दन्तोष्ठ्यः ।
सृक् वस्थानमेके ।
उपूपध्मानीया ओष्ठ्याः ।
एदैतौ कण्ठतालव्यौ ।
ओदौतौ कण्ठौष्ठ्यौ ।
ञमङणनाः स्वस्थाना नासिकास्थानाश्च ।
(१/२-१३, १७-१९) ।

८—शाकटायन प्रक्रिया संग्रहः—

अकुहविसर्जनीयजिह्वामूलीयानां कण्ठः । हविसर्जनीययोरुरः । कोर्जिह्वामूलीयस्य च जिह्वामूलम् । सर्वमुखस्थानमवर्णमित्येके । इ-ए-ऐ-

चुयशानां तालु। एदैतोः कण्ठताल्वेकेषाम्। उ-ओ-औ-पूपध्मानीयाना-मोष्ठौ। ओदौतोः कण्ठोष्ठमेकेषाम्। वस्य दन्तोष्ठम्। सृक् वस्थानमेके-षाम्। ऋटुरषाणां मूर्धा। रेफस्य दन्तमूलमेकेषाम्। लृतुलसानां दन्ताः (पृ. ३३,३४)।

९—सिद्धान्तकौमुदी—

अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तो-ष्ठम् (१/१/९ सूत्रस्थ)।

अद्यत्व उर्दू व्यवहृताः क़ ख़ ग़ा इव प्राचीनभारते कदाचित् कवर्गोऽधिजिह्वाया उदचार्यत। अन्यथा कवर्गः शुक्लयजुःप्रातिशाख्य-पाणिनीयशिक्षादौ जिह्वामूलीयभावेन कथितो न स्यात्। गोलकबिहारी-धलकृतध्वनिविज्ञानस्य प्रथमे कोष्ठकेऽपि क-ख-ग-ङ-ऋ ॠ इतिवर्णा अधिजिह्वास्थाना निगदिताः। पाश्चात्त्यभाषागताः कतिचिद् रवर्णा अप्यधिजिह्वास्थाना इति Daniel Jones महोदयानाम् An Outline of English Phonetics ग्रन्थाज् ज्ञायते (Sec. 746, Chap. 4, p. 194)। परवर्त्तिनि कालान्तरे चाद्यत्व इव कवर्ग ईषत्परवर्त्तिनः कण्ठ (१) स्थानादुच्चारितो नूनमभूदिति केचिदिमं कण्ठ्यवर्गमाचक्षते। अत्रेदं स्मर्तव्यं यत्पूर्वोक्ताऽधिजिह्वा कण्ठापरपर्यायस्य श्लक्ष्णतालुनो नैव दूरवर्त्तिनी, किन्तु तत्पूर्वभागेण संलग्नैकत्रैव तिष्ठति।

प्रातिशाख्यशिक्षाग्रन्थेभ्यो विविधवैदिकशाखाध्यायिनामुच्चारण-पद्धतिर्विविधोपलभ्यते। व्याकरणेषु च क्वचिदुच्चारणपार्थक्यं सूचितम्। यतः स्मरणातीतसमयादारभ्याद्ययावन्मानवसमाजो भाषामुच्चारयतीति सृष्टेर्विषयान्तराणामीवोच्चारणस्यापि देशकालपुरुषैः परिवर्तनं स्वाभाविक-

मेव । पृथग्भूतान्युच्चारणानि कस्मिन् स्थाने कस्मिन् काले वाऽऽसन्निति विषये यथार्थनिरूपणं नैव सुसाधम् । तादृशोच्चारणानां यथार्थरूपं च दुर्विज्ञेयं भवति; यथाऽद्यत्व उच्चारणानि यन्त्रफलकेषु (record) निबध्यन्ते, तथा तदानीं व्यवस्थाया अभावात् । वर्णानामीदृशे नगण्य उच्चारणपार्थक्य उपेक्षिते सति मौलिकमुच्चारणं प्रायः सर्वत्र समानं दृश्यते । विविधाचार्यमतानुसारमेकाधिकस्थानादुच्चार्यमाणानां वर्णानां प्रदर्शनार्थैका सूची दीयते ।

## कोष्ठकम्—५

केषांचिद्वर्णानां मतभेदेन स्थानभेदः

| वर्णः | उच्चारणस्थानम् |
|---|---|
| अ | सर्वमुखम्, कण्ठः, उपजत्रु |
| ऋ | जिह्वामूलम्, मूर्धा |
| ऌ | जिह्वामूलम्, दन्ताः |
| ए-ऐ | कण्ठतालु, तालु |
| ओ-औ | ओष्ठः, कण्ठौष्ठम् |
| क-ख-ग-घ | कण्ठः, जिह्वामूलम्, सर्वमुखम् |
| ङ | नासिकाकण्ठम्, सर्वमुखम् |
| ड | जिह्वामूलम्, तालु, मूर्धा |
| त-थ-द-ध | दन्ताः दन्तमूलम् |
| न | नासिकादन्तम्, नासिका, दन्तमूलम् |
| र | वर्त्स्यम्, मूर्धा, दन्तमूलम् |
| ल | दन्ताः, दन्तमूलम् |
| व | दन्तौष्ठम्, ओष्ठः, सृक्क, दन्ताः |
| ह | उरः, कण्ठः जिह्वामूलम्, तालु, कण्ठतालु, मूर्धा, दन्ताः, ओष्ठः, कण्ठौष्ठम्, सर्वमुखम् |

अवशिष्टानाम् इ-उ-च-छ-ज-झ-ञ-ट-ठ-ड-ढ-ण-प-फ-ब-भ-म य-श-ष-सानामुच्चारणस्थानविषये न कश्चिन्मतभेदो दृष्टः ।

## (२) प्रक्रमस्थानानि

एषूच्चारणस्थानेषु वाय्वाघातात् पूर्वमन्यविधेषूच्चारणस्थानेषु वायोरुपक्रमो भवति, तानि स्थानानि च प्रक्रमस्थानानि (Places of initiation) निगद्यन्त इति केचिदाशेरते । तेषामिदं तात्पर्यं यत्—"सिद्धं तु समानप्रक्रमवचनात्" (१/२/२९ सूत्रस्थ) इति वार्त्तिकव्याख्यावसरे तानि प्रक्रमस्थानानि त्रीणीति महाभाष्ये परिगणितानि । यथा—"कः पुनः प्रक्रमः ? उरः, कण्ठः, शिर इति" । एतान्युरःकण्ठशिरांसि प्रक्रमस्थानानि मुखविवरगतोच्चारणस्थानेभ्य उरःकण्ठशिरोभ्यो भिन्नानि । यस्य कस्यचिद् वर्णस्योच्चारणोपक्रमे प्रथमतो वायुरुरसि कण्ठे शिरसि वा प्रक्रान्तो भवति । तदनन्तरं कण्ठताल्वादीनामुच्चारणस्थानानामन्यतमेषु तत्तद्वर्णानुच्चारयितुं प्रभवतीति महामहोपाध्यायो गिरिधरशर्मा वाचस्पतिः । तथाच तल्लिखितायां महाभाष्यभूमिकायाम् (३४ पृष्ठे)—"उरसि कण्ठे शिरसि वा क्वचिद् वक्तुरभिप्रायानुसारेण केन्द्रं प्रकल्प्य पुनर्वायुस्तस्मात् केन्द्रादुत्थाय मूर्धपर्यन्तं गच्छति, ततश्चाभिघातमासाद्य मुखे प्राप्तस्तत्तत्स्थानसंबन्धेन वर्णान् जनयतीति स्फुटोऽभिप्रायः" इति ।

पाणिनीयशिक्षायां प्रक्रमस्थानानि सवनस्थानरूपेणाख्यातानि, कण्ठताल्यादिस्थानानि चैभ्यः पृथग्भावेनाख्यातानि । तथा हि तत्र—

"प्रातः पठेन्नित्यमुरःस्थितेन—"

इत्यादिश्लोकद्वये (३६,३७) प्रातःसवने सर्वे वर्णा उरःस्थानात्, माध्यन्दिनसवने कण्ठस्थानात्, सायंसवने च शिरःस्थानात् प्रयोज्या इत्युक्तम् ।

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा
जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च" (श्लो. १३)—

इत्यादिषु चोरःकण्ठशिरांसि स्थानाष्टकमध्यान्तर्गतानीति प्रतिपाद्य परस्तात् केषांचिदेव वर्णानामुरःकण्ठशिरोभ्य उच्चारणं शंसितम्, न तु पूर्वोक्तश्लोकवत् सर्वेषामेव वर्णानामेकैकेनोरःकण्ठशिरःस्थानेनेति । शुक्लयजुः प्रातिशाख्येऽपि "सवनक्रमेणोरःकण्ठभ्रूमध्यानि" (१/३०) इति प्रातरादिसवनत्रये यथाक्रममुरःकण्ठशिरसां* प्रक्रमस्थानानामुपयोगमभिधायैषु स्थानेषु वायुप्रक्रम उच्चारयितुः शरीरस्य यथाक्रममूर्ध्वाधस्तिर्यग्गतिसंपादिका आयाममार्दवाभिघाता भवन्ति, तेन स्वरस्योच्चनीचविशेषाश्च भवन्तीति प्रतिपादितम "आयाममार्दवाभिघाताः, उच्चनीचविशेषः" (१/३१,३२) इति सूत्राभ्याम् । तैत्तिरीयप्रातिशाख्ये तु तस्य प्रातिश्रुत्कानि भवन्त्युरः कण्ठः शिरो मुखं नासिके" (२/३) इति सूत्रेण वायोः प्रतिध्वन्युपयोगीन्युरःकण्ठशिरांसि प्रक्रमस्थानानि, मुखनासिकाख्यानि चेतरोच्चारणस्थानानि युगपदुपात्तानीत्यनुमीयते; अन्यथा, उरःकण्ठशिरसां मुखेऽन्तर्भावादेषां विशिष्याभिधानं पौनरुक्त्यापादकं स्यात् ।

शंसितप्रकारेण मनीषिणां विवेचने सत्यपि प्रक्रमस्थानानामाकृतिप्रकृत्यवस्थितिविषये विशदविवेचनं कुत्रचिदपि प्राचीनग्रन्थे नावलोक्यते, नाप्याधुनिकविज्ञान एतद्विषये कोऽप्युल्लेखः समुल्लसति । नागेशोऽपि महाभाष्ये प्रक्रमान्तर्गतं शिरःशब्दं मुखविवरगतानामितरोच्चारणस्थानानामुपलक्षकं प्रकल्प्य प्रक्रमस्थानानि मुखविवरगतस्थानान्येव मन्यते, न तु तदितरभूतानि सवनस्थानानि । इत्थं प्रक्रमस्थानशब्दस्य द्विविधोऽर्थः शास्त्रेषु विहितः ।

* भ्रूमध्यशब्दस्यात्र शिरसि तात्पर्यम् ।

सन्दर्भेऽस्मिन् पाणिनीयव्याकरणानुसारं ह्रस्वस्वरो दीर्घप्लुतस्वरयोः प्रतिनिधिरूपेणापि व्यवह्रियते । अतः "अः कण्ठ्यः" इत्युक्ते ह्रस्वदीर्घप्लुताकाराः कण्ठ्या इत्यायाति । स्थलविशेषेषु यत्रायं साधारणनियमो न प्रयुज्यते, तद्विषये भाषाभङ्ग्या सूचना दीयते, येन ज्ञातं स्याद् यदयं ह्रस्वो दीर्घः प्लुतो वेति ।

## (३) करणम्

**मानव उच्चारणस्थानेभ्यः क्वचिज्जिह्वया क्वचिदोष्ठेन वा वर्णानुच्चारयति । यथा—ओष्ठ्य-सृक्कण्यवर्णोच्चारण ओष्ठस्तदितरवर्णोच्चारणे च जिह्वा निमित्तं भवति । व्याकरणे प्रातिशाख्येषु चोच्चारणक्रियायाः साधकतमत्वाज्जिह्वादिः करणत्वेन व्यपदिष्टः । क्रियते वर्णोच्चारणमनेनेति करणवाच्ये ल्युटि करणशब्दसिद्धिः । केचित् क्रियत इति करणमिति भाववाच्यव्युत्पत्त्या जिह्वादीनां मुखविवरे जायमानस्य व्यापारस्यार्थे करणशब्दं प्रयुञ्जते । इत्थं करणशब्दस्यार्थद्वयं शब्देन्दुशेखरे दर्शितम् । यथा—तत्तत्स्थानजिह्वादिसंबन्धेन वर्णोत्पत्त्या जिह्वाग्रादौ तत्संबन्धजनकप्रयत्नविशेषे स्पृष्टतादौ च करणत्वव्यवहारः" (संज्ञाप्रकरणम् पृ. २६) इति । अत्र संदर्भे तु करणवाच्यनिष्पन्नो जिह्वाद्यर्थकः करणशब्दो व्यवह्रियते यस्य इङ्ग्लिश्पर्यायः articulator इति producer of sound इति वा ।**

करणवाच्य व्युत्पत्त्या वर्णोच्चारणे जिह्वादि करणमेव क्रियाशीलम्, उच्चारणस्थानं तु निष्क्रियमित्यवगम्यते । तेन करणमेव विविधा गतिस्थितीरवलम्ब्य वर्णानुच्चारयतीति सिध्यति । इत्थं वस्तुस्थितौ सत्यामोष्ठ्यवर्णोच्चारणे सव्यापारस्याधरापरपर्यायस्य निम्नोष्ठस्य करणत्वमेव ।

सर्वाण्युच्चारणस्थानान्युत्तरहनावेव विन्यस्तानीति युक्त्या तैत्तिरीयप्रातिशाख्यस्य २/३९ सूत्रस्था च्छन्दोभाषाव्याख्याऽपि "तत्र उत्तरोष्ठः स्थानम् । उत्तरत्वसामान्यात् स्थानानाम् । अधरः करणम्" इत्याह । एतन्मतानुसारं ते वर्णा ओष्ठ्या न तु द्व्योष्ठ्याः । अधरस्तु करणमेव । अनयैव रीत्या "कण्ठ्यानामधरकण्ठः" (१/१९) इति निम्नकण्ठं करणरूपेण विवेचयताऽथर्व-प्रातिशाख्येनोर्ध्वकण्ठः स्थानमध्ये गणितः ।

ओष्ठौ स्थानमिति शंसन्ती चारायणीयशिक्षौष्ठ्यानामाधुनिक-भाषाविज्ञानानुमोदितं द्व्योष्ठ्यत्वं यत् समर्थयति तत् पूर्वोक्तविचारस्य प्रतिकूलं भवति ।

मूर्धाभिधं स्थानद्वयं प्रागनुमितम् । मूर्ध्नः शास्त्रविहितकरणद्वय-चर्चा तदनुमानं द्रढयति । इदमत्रालोचनीय यदाधुनिकभाषाविज्ञानं कण्ठ-तालुमध्ये मूर्ध्नः स्थानं शंसति । तेन भोलानाथतिवारीकृतभाषाविज्ञान-ग्रन्थे ध्वनियन्त्रचित्रे (अध्याय ७, पृ. ३१०) इदमेव स्थानं मूर्धत्वेन व्यपदिष्टम् । इदानीं भारते व्यवह्रियमाणासु संस्कृतादिभाषास्वस्मिन् स्थान उच्चारणे क्रियमाणे जिह्वाग्रं प्रतिवेष्टितं (retroflex) भवति । तेन निम्नजिह्वोपाग्रनाम्ना कथितस्य जिह्वाग्राधोवर्तिप्रदेशस्य मूर्ध्नि स्पर्शो भवति । एतच्च समर्थितं "जिह्वाग्राधः करणं वा" (२/७ सूत्र) इत्यापिशल-शिक्षया ।

किन्तु तस्यामेव शिक्षायां "जिह्वोपाग्रेण मूर्धन्यानाम्" (२/६) इति सूत्रं मतान्तरं प्रकाशयज्जिह्वोपाग्रशब्देन संभवत ऊर्ध्वजिह्वोपाग्रं परामृशति । तच्च मूर्धन्यानां करणमिति प्रकाशयति । एवं सत्यूर्ध्वजिह्वोपाग्रं कण्ठतालु-मध्यगतं स्थानं कदापि स्प्रष्टुं न प्रभवतीत्येतन्मतस्वारस्येनोर्ध्वजिह्वो-

प्रायेण स्पर्शयोग्यं किमपि स्थानं मूर्धशब्देन ग्रहणीयम् । तच्च स्थानं तालुदन्तमध्यगतमेव भवितुमर्हति ।

द्वितीयमतसमर्थकं प्रमाणान्तरमप्यस्ति । यथा—उच्चारणस्थान-क्रमेण सज्जितायाः संस्कृतवर्णमालायाः पर्यवेक्षणेन ज्ञायते यत्, तालुदन्त-मध्य एव मूर्धाऽवतिष्ठत इति । अन्यथा मूर्धन्यवर्णाः कण्ठ्यतालव्यवर्णमध्य एव सन्निवेशिताः स्युर्न तु तालव्यदन्त्यवर्णमध्ये । यथा—

(१) स्पर्शवर्णेषु च-छ-ज-झ-ञ इति तालव्यवर्गानन्तरं ट-ठ-ड-ढ-ण इति मूर्धन्यवर्गो निवेशितः ।

(२) अन्तस्थवर्णेषु तालव्ययकारानन्तरं मूर्धन्यो रेफः प्रदत्तः ।

(३) ऊष्मवर्णेषु तालव्यशकारानन्तरं मूर्धन्यषकारोऽवस्थापितः ।

(४) स्वरवर्णेष्वपि तालव्यादिकारात् परं मूर्धन्यस्य ऋकारस्य स्थानम् ।

तन्त्रशास्त्रे मूर्धन्यवर्णरूपेण गृह्यमाणो । ळ इति वर्ण ओडियावर्ण-मालायां तालव्ययकारानन्तरमेव विन्यस्त इत्यपि निदर्शनान्तरं भवितुमर्हति ।

इत्थं द्वयोरुच्चारणस्थानयोर्मूर्धशब्देन ग्रहणं न्याय्यम् । देशकाल-वैदिकशाखाभेदेन मूर्धन्यवर्णानामेतद् द्विविधमुच्चारणं प्राचीनभारत आसीत्, अधुना व्यवह्रियमाणासु भाषासु केवलं कण्ठतालुमध्यवर्त्ति-स्थानादेव तदुच्चारणं भवतीति कल्पनाऽत्र साधीयसी प्रतिभाति ।

जिह्वादि क्रियाशीलमेव करणम्, उच्चारणस्थानं तु निष्क्रियमिति स्थानकरणयोरयं भेदो न सर्वसम्मतः। तथाहि—तैत्तिरीय प्रातिशाख्ये "हनुमूले जिह्वामूलेन कवर्गे स्पर्शयति" (२/३५) इति सूत्रे निष्क्रियस्य हनुमूलस्य "अन्येषां तु यत्र स्पर्शनं तत् स्थानम्" (२/३२) इति तत्प्रतिज्ञानुसारं स्थानत्वे प्रकाशितेऽपि तथा क्रियाशीलस्य जिह्वामूलस्य "येन स्पर्शयति तत् करणम्" (२/३४) इति सूत्रानुसारं करणत्वे सूचितेऽपि शुक्लयजुः प्रातिशाख्ये "जिह्वामूलीयानुस्वारा हनुमूलेन" (१/८३) "ऋ×कौ जिह्वामूले" (१/३५) इति सूत्रयोर्विपरीतविभक्तिनिर्देशाद्धनुमूलस्य करणत्वं जिह्वामूलस्य च स्थानत्वं प्रकाशितम्। जिह्वामूलीयानां हनुमूलम्" (१/२०) इत्यथर्वप्रातिशाख्यमपि शुक्लयजुःप्रातिशाख्योक्तं समर्थयति। तद्वत् "कण्ठादिकरणैर्वर्णाः—"(२/२) इति सारदातिलकेऽपि कण्ठादीनां करणत्वमभिहितम्। हनुमूलवन्निष्क्रियाणि हनुमध्य-नासिकामूलदन्ताग्राण्यपि शुक्लयजुःप्रातिशाख्ये "कण्ठ्या मध्येन, नासिकामूलेन यमाः, वो दन्ताग्रैः" (१/८४,८२,८१) इति सूत्रैः करणत्वेन विवेचितानि। एवं तैत्तिरीयप्रातिशाख्ये "ओष्ठान्ताभ्यां द(न्तैर्व?) न्तेषु वकारे" (२/४३) इति सूत्रे क्रियाशीलस्य सृक्कणः करणत्वे प्रतिपादितेऽपि शाकटायनप्रक्रियासंग्रहे "सृक् वस्थानमेकेषाम्" (१/१/६) इति सूत्रे तस्यैव सृक्कणः स्थानत्वं कल्पितम्।

स्थानकरणयोर्भेदेऽङ्गीक्रियमाणे जिह्वादीनां करणत्वं कण्ठादीनां च स्थानत्वं सिध्यति, परन्तु यथा सारदातिलकादौ कण्ठादीनामेव करणत्वमुक्तम्, तत्र स्थानकरणभेदवादे किं वा स्थानमिति प्रश्नः समुदियादेव। हनुमूलशब्दः (१) कठोरतालुनो (२) दन्तमूलावस्थितास्थिमयस्थानस्य वा मूलभाग परामृशतीति "Translation And Notes on अथर्व-

प्रातिशाख्य" इत्यभिध पुस्तके Whitney महोदयः[5] । भारतीयैर्जिह्वामूलीयभावेन गृहीतयोः कगयोरुच्चारणस्थानमिदमिति च स मन्यते। W. S. Allen महोदयः Phonetics in Ancient India ग्रन्थे हनुमूलशब्देनोर्ध्वहनुमूलं (root of the upper jaw) गृहीत्वा, इयं श्लक्ष्णतालुनो बोधगम्याऽथाप्यपूर्णा संज्ञा (a rather inadequate though intelligible designation of soft palate) इति वदति Phonetics in Ancient India (Part. 2, Sec. 2.01, p. p. 51, 52) ग्रन्थे। एतादृशहनुमूलं पश्चाज्जिह्वार्थे व्यवहृतं जिह्वामूलं चासन्नतरम्। मन्यामहे तैत्तिरीयप्रातिशाख्यकारः जिह्वाया अग्रोपाग्रमध्यानीव मूलमपि करणभावेन गणनीयं मन्यमान उच्चारणस्थानमध्ये तन्नाजीगणत्।

तेन ग्रन्थेन जिह्वाया अंशविशेषा निम्नौष्ठश्च वर्णानां करणरूपेण वर्णिताः। तदनुसारं वर्णोच्चारणे स्थानकरणानां विविधावस्थाप्रदर्शनार्थमिदं कोष्ठकं दीयते।

---

5. "By हनुमूल 'Root or base of the jaw,' must be here understood, it should seem, the posterior edge of the hard palate which might, well enough, be regarded as the base of the Upper jaw, or of the bony structure in which the Upper teeth are set. It is, in fact, by a contact produced at this point between the root of the mouth and the nearest part of the tongue that our own gutturals क and ग are uttered" (१/२० सूत्रस्थ)।

## कोष्ठकम्—६

## वर्णोच्चारणे स्थानकरणानामवस्थितयः

| वर्णाः | करणानां स्थितिगतयः |
|---|---|
| अ | ओष्ठद्वयस्य हनुद्वयस्य चानतिसंश्लिष्टता |
| ओ | ओष्ठद्वयस्य हनुद्वयस्य चानतिविस्तृतिः |
| अ-आ-उ-ओ | जिह्वायाः स्वाभाविकी स्थितिः |
| इ | जिह्वामध्यस्य तालुनिकटवर्तिता |
| इऋऌ | ओष्ठद्वयस्यानतिसंश्लिष्टता |
| उ | ओष्ठद्वयस्य परस्परमतिनिकटवर्तिता दीर्घता च |
| ऋऌ | हनुद्वयस्यानतिसंश्लिष्टता, जिह्वाग्रस्य वर्स्त्वे निक्षेपश्च |
| ए | ओष्ठद्वयस्येषन्निकटवर्तिता हनुद्वयस्यातिसंश्लिष्टता, जिह्वामध्यस्य प्रान्ताभ्यां हनुमूलस्य प्रान्तप्रदेशस्पर्शश्च |
| व्यञ्जनपरवर्त्ती ए | जिह्वामध्यभागस्येषत् तालुनिकटवर्तिता। |
| ओ | हनुद्वयस्यानतिविस्तृतिः, ओष्ठद्वयस्यातिसंश्लिष्टता च |
| कवर्गः | जिह्वामूलेन हनुमूलस्पर्शः |
| चवर्गः | जिह्वामध्येन तालुप्रान्तयोः स्पर्शः |
| टवर्गः | प्रतिवेष्टितेन जिह्वाग्रेण मूर्धस्पर्शः |
| तवर्गः | जिह्वाग्रेण दन्तमूलस्पर्शः |
| पवर्गः | ओष्ठयोः परस्परं स्पर्शः |
| ए-य | जिह्वामध्यस्य प्रान्ताभ्यां तालुस्पर्शः |
| र-ल | जिह्वाग्रमध्येनाभ्यन्तरदन्तमूलोपरिभागस्पर्शः |
| व | ओष्ठप्रान्ताभ्यामूर्ध्वदन्ताग्रस्पर्शः |
| श | जिह्वामध्यस्य मध्यभागविस्तारः |
| ष-स | जिह्वाग्रस्य मध्यभाग विस्तारः |

तैत्तिरीयप्रातिशाख्ये स्वराणामुच्चारणे "यदुपसंहरति तत् करणम्" (२/३२) इति, व्यञ्जनानामुच्चारणे च "येन स्पर्शयति तत्करणम्" (२/३४) इति सूचितत्वादेतत्सूचनानुसारं तत्तद्वर्णोच्चारणप्रक्रियाप्रदर्शकसूत्रानुशीलनेन किं स्थानं किं वा करणमिति ज्ञातुं शक्यम् । यथा—"हनुमूले जिह्वामूलेन कवर्गं स्पर्शयति" (२/३५) इति सूत्रे जिह्वामूलेन हनुमूले स्पर्शोक्त्या जिह्वामूलं करणं हनुमूलं चोच्चारणस्थानं सिध्यति । इत्थमुच्चारणस्थानप्रसङ्ग उद्धृतानि तैत्तिरीयप्रातिशाख्यसूत्राणि करणनिरूपणायाप्युपयुज्यन्त इति न तानि पृथगत्र प्रदत्तानि । केवलं तत्रानुल्लिखितं श-ष-स विषयकं सूत्रं तु "करणमध्य तु विवृतम्" (२/४५) इति ।

ह-ऐ-औ इति वर्णत्रयचर्चा कोष्ठके न कृता । तत्र "करणाभाव एतयोः" इति तैत्तिरीयप्रातिशाख्य(२/४६)स्थच्छन्दोभाषाव्याख्यायां हस्य करणाभाव उक्तः । "अत्र तु करणवत्त्वमपि विद्यते" इत्यपि मतान्तरम् "उदयस्वरादिसस्थानो हकार एकेषाम्" (तै. प्रा. २/४७) इत्यत्रत्ये त्रिभाष्यरत्न उपस्थापितम्, आदिसस्थानपदेन आदिसमानस्थानकरण इत्यर्थात् । ऋक्प्रातिशाख्यप्रदत्तमतान्तरानुसारं हस्योरस्यत्वपक्ष उरःशब्देन यदि W. S. Allen महोदयस्य व्याख्यानानुसारं फुप्फुसार्थः क्रियेत, यदि वा भोलानाथतिवारीव्याख्यानानुसारं काकलकार्थः क्रियेत, तर्हि तत्रोच्चार्यमाणस्य हस्य करणाभावकल्पना समीचीना स्यात्, फुप्फुसकाकलकसमीपे कस्यापि जिह्वांशस्यासत्त्वात् । "अकुहविसर्जनीयानां कण्ठः" इति सिद्धान्तकौमुदी(१/१/८सूत्रस्थ) मतेतु कण्ठनिकटवर्तिनो जिह्वामूलस्य करणत्वमपि वक्तुं शक्यम् ।

ऐ औ इत्येतयोः स्थान-करण-करणव्यापारविषये तैत्तिरीयप्रातिशाख्ये वर्णनं नास्ति । तथापि तत्र द्विमात्रिकयोस्तयोः अ½+इ १½=ऐ अ½+उ १½=औ इति मात्राविभाजनं भवति । ततश्च स्वल्पनासिकास्थानेनोच्चारणादनुनासिकस्वराणां यथा नासिकास्थानं न कल्प्यते, तथा

स्वल्पस्याकारांशस्योच्चारणस्थानकल्पनाऽत्र न भवति। अवशिष्टयोः साधक-मात्रयोरिकारोकारयोरुच्चारणस्थानमेव ऐ-औ इत्यनयोरुच्चारणस्थान-मित्यायाति।

साम्प्रतमुच्चारणायोपयुज्यमानाः करणभागास्तैत्तिरीयप्रातिशाख्य-दिशा कोष्ठकमध्य उपस्थाप्यन्ते। अत्र जिह्वाया एव विविधा अंशाः प्रदर्शिताः, ओष्ठस्य तु तादृशांशकल्पना शास्त्रेषु नैव कृतेति तदंशा न प्रदर्शिताः।

## कोष्ठकम्—७

## उच्चारणे करणस्य विविधांशानामुपयोगः

| करणांशः | वर्णाः |
|---|---|
| जिह्वाया मूलम् | अ, कवर्ग |
| जिह्वाया मध्यम् | इ, चवर्ग, श, य, ए (य, ए इत्यनयो-रुच्चारणे जिह्वामध्यस्य प्रान्तद्वयं करणम्) |
| जिह्वाग्रम्, (जिह्वायाअग्रम्, अग्रजिह्वा वा) | ऋ, लृ, टवर्ग, तवर्ग-ष-स-र-ल (रोच्चारणे जिह्वाग्रस्य मध्यभागः करणम्, आपिशलि-शिक्षामतेन जिह्वोपाग्रं जिह्वाग्राधो वा करणं भवति।) |
| जिह्वाया मूलमध्ये | ऐ |
| जिह्वाया मूलं निम्नौष्ठश्च | औ |

आलोचितानां करणव्यापाराणां पारिभाषिकं नाम 'आभ्यन्तर-प्रयत्न' इति। मुखगह्वरे क्रियमाणः प्रयत्न आभ्यन्तरप्रयत्न इत्यभिधीयते।

कतिपयग्रन्थेभ्यः समाहृत्याभ्यन्तरप्रयत्नस्य दश प्रभेदा अत्र संकलिताः। ते यथा—

(१) संवृतम्।

(२) विवृतम्।

(३) ईषद्विवृतम्।

(४) विवृततरम्।

(५) विवृततमम्।

(६) अतिविवृततमम्।

(७) अस्पृष्टम्।

(८) ईषत्स्पृष्टम्।

(९) अर्धस्पृष्टम्।

(१०) , स्पृष्टं चेति।

अत्र संवृतविवृतशब्दाभ्यां मुखविवरस्य संकोचविस्तारावभिप्रेतौ, स्पृष्टशब्देन च करणेनोच्चारणस्थानस्य स्पर्श ईप्सितः। कतिपयमतानुसार-माभ्यन्तरप्रयत्नविशेषैरुच्चार्यमाणानां वर्णानां सूच्यत्र प्रदीयते।

## कोष्ठकम्—८

संकलिता आभ्यन्तर प्रयत्नाः

| | (क) | (ख) | (ग) | (घ) | (ङ) | (च) | (छ) |
|---|---|---|---|---|---|---|---|
| वर्णाः | माण्डूकीशिक्षा | सिद्धान्तकौमुदी | उव्वट भाष्यम् | वर्णरत्नप्रदीपिका शिक्षा | पाणिनीय शिक्षा | चान्द्रवर्णसूत्राणि | शाकटायन प्रक्रिया संग्रहः |
| अ | विवृतम् | संवृतम् | संवृतम् | अस्पृष्टम् संवृतम् | अस्पृष्टम् विवृतम् | संवृतम् | संवृतम् |
| आ | ” | विवृतम् | विवृतम् | अस्पृष्टम् विवृतम् | ” | अति विवृततमम् | अतिविवृततमम् |
| इ, उ | ” | ” | अस्पृष्टम् | ” | ” | विवृतम् | विवृतम् |
| ऋ | ” | ” | ” | ईषत्स्पृष्टम् विवृतम् | ” | ” | ” |
| ऌ | ” | ” | ” | ” | ईषत्स्पृष्टम् विवृतम् | ” | ” |
| ए, ओ | ” | ” | ” | अस्पृष्टम् विवृतम् | अस्पृष्टम् विवृततरम् | विवृततरम् | विवृततरम् |
| ऐ, औ | ” | ” | ” | ” | अस्पृष्टम् विवृततमम् | विवृततमम् | विवृततमम् |
| कात् मपर्यन्ताः | स्पृष्टम् | स्पृष्टम् | स्पृष्टम् | स्पृष्टम् | स्पृष्टम् | स्पृष्टम् | स्पृष्टम् |
| यरलव | अस्पृष्टम् | ईषत्स्पृष्टम् | ईषत्स्पृष्टम् | ईषत्स्पृष्टम् | ईषत्स्पृष्टम् | ईषत्स्पृष्टम् | ईषत्स्पृष्टम् |
| श, ष, स | विवृतम् | विवृतम् | अर्धस्पृष्टम् | अर्धस्पृष्टम् | अर्धस्पृष्टम् | विवृतम् | विवृतम् |
| ह | ” | ” | ” | ” | स्पृष्टम् | ” | ” |

अत्र प्रमाणानि तावत्—

(क) स्पर्शानां करणं स्पृष्टमन्तस्थानामतोऽन्यथा ।
यमानां (स्वरितं?) संवृतं प्राहुर्विवृतं च (वि?) स्वरोष्मणाम्
(माण्डूकीशिक्षा श्लो. ७०)

(ख) तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तस्थानाम् । विवृतमूष्मणां स्वराणां च । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव ।
(सिद्धान्त कौमुदी १/१/६ सूत्रस्थ)

(ग) संवृतास्यप्रयत्नोऽकारः । विवृतास्यप्रयत्ना इतरे (आकाराः) । अस्पृष्टास्यप्रयत्नाः स्वराः । स्पृष्टास्यप्रयत्नाः स्पर्शाः । ईषत्-स्पृष्टास्य प्रयत्ना अन्तस्थाः । अर्धस्पृष्टास्यप्रयत्ना ऊष्माणः अनुस्वारश्च । [उव्वटभाष्यम् (शु. य. प्रा. १/७२ सूत्रस्थ) ]

(घ) अकारः संवृतो ज्ञेयो विवृताश्चेतरे स्वराः
अस्पृष्टास्यप्रयत्नाश्च स्वराः सर्वे भवन्ति हि ।
स्पृष्टाः स्पर्शास्तु विज्ञेया अन्तस्था ईषदुत्स्पृशः ।
अर्धस्पृष्टाश्च विज्ञेया ऊष्माणो वर्णवेदिभिः ॥
ऋलोर्मध्ये भवत्यर्धमात्रा रेफलकारयोः
तस्मादस्पृष्टता न स्यात्संभवे ऋलृकारयोः ।
(वर्णरत्नप्रदीपिकाशिक्षा (श्लो. ४०-४२)

(ङ) अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शरः स्मृताः
शेषाः स्पृष्टा हलः प्रोक्ताः............
स्वराणामूष्मणां चैव विवृतं करणं स्मृतम्
तेभ्योऽपि विवृता वेङौ ताभ्यामैचौ तथैव च ।
(पाणिनीयशिक्षा श्लो. ३८, ३६)

स्थानं नास्ति, तथापि तन्त्रशास्त्र-शिक्षाशास्त्र-प्रातिशाख्यप्रभृतौ विविध-दृष्ट्या तयोर्वैशिष्ट्यं निरूपितम्। यथा—

"विन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मता" (४/१९) इति
"विन्दुसर्गौ च यौ प्रोक्तौ तौ सूर्यशशिनौ क्रमात्" (३/७)

इति च प्रपञ्चसारतन्त्रम्,

"विन्दुः संहार इत्युक्तो विसर्गः सृष्टिरुच्यते" (१६/६६)
इत्यहिर्बुध्न्यसंहिता च।

विसर्ग इति नाम यथा सार्थकं तथा निगूढतत्त्वप्रकाशकम्। सृज्-धातुनिष्पन्नोऽयं शब्दोऽस्मादेव सर्वे वर्णाः सृष्टा इति प्रकाशयति। तन्त्र-शास्त्रेऽयं सर्ग इत्युच्यते। यथा—

"सृष्टिः सर्गो विसर्गश्च विसर्जनमितीदृशैः"
(अहिर्बुध्न्यसंहिता १६/५३) इति।

विसर्गशक्तिरेव जगत्स्रष्ट्री कुण्डलिनीति कथितं जगदीश-चन्द्रभट्टाचार्येण शिवसूत्रविमर्शिनीटिप्पण्याम्। यथा—"सा पारमेश्वरी संविन्मात्ररूपा विसर्गशक्तिरेव गर्भीकृतनिखिलविश्वत्वात्कुण्डलिनीशब्द-व्यपदेश्या······" (उन्मेष २, संख्या ५३) इति।

व्याकरणे विसर्जनीय इत्यप्यस्य नाम। यथा—"विसर्जनीयस्य सः" इत्यष्टाध्यायी (८/३/३४)। अत्र विविधरूपेण सर्जनीय इति व्युत्पत्तिः। विसर्गो हि वर्णाष्टकभावेन सृज्यत इति शिक्षाविदः। यथा—

"ओभावश्च विवृत्तिश्च शषसा रेफ एव च।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः" (श्लो. १४३)
इति याज्ञवल्क्यशिक्षा।

यद्वा विपूर्वस्य सृजतेस्त्यागार्थत्वात्स्वरात्परं त्याज्यो निक्षेप्यो वेति योगरूढार्थ आयाति। तन्त्रमते—यथा स्त्रीपुरुषयोः संयोगेऽखिलं शरीरमानन्दयद्रेतः सुषुम्नामार्गेण निःसरद् विसृज्यते, तस्माच्च प्राणिसृष्टिर्भवति, तथैव शिवशक्तिरूपयोरकारविसर्गयोर्योगे वर्णसृष्टिर्भवति। तथा च तन्त्रसारस्य मुकुन्दरामशास्त्रिकृतटिप्पण्यामुद्धृतं मालिनीवार्त्तिकम्—

"विसर्गः किल शाक्तोऽसौ विक्षेप इति यः स्मृतः

× × ×

अनुत्तरस्याकारस्य परभैरवरूपिणः
अकुलस्य परा येयं कौलिकी शक्तिरुत्तमा।
स एवायं विसर्गस्तु तस्माज्जातमिदं जगत्

× × ×

अनुत्तरस्वभावत्वादाद्यस्यैव विजृम्भितम्
स एव भगवानन्तर्नित्यं प्रस्फुरदात्मकः।

× × ×

नित्यं स्फुरति सम्पूर्णविसर्गरससुन्दरः।
शिवशक्त्योः स संघट्टः स्नेह इत्यभिधीयते॥
अत्रैव पूर्णवैसर्गपदे लब्धुं प्रवेशनम्।
लेहनामन्थनेत्यादि सम्प्रदायमुपासते॥
तथा हि मध्यमां नाडीमधिष्ठायाखिलं वपुः।
प्राणयत्परमं तेजः प्रक्षुब्धामृतमान्यतः॥
विसृष्टिरूपतां गच्छेद् यात्यानन्दचमत्क्रियाम्।
अपूर्णा केवलं सा तु पूर्णा तु भगवन्मयी॥
तेन वैसर्गिकी शक्तिरेकैवेयं विजृम्भते"

(तन्त्रसार आ. ३ पृ. २४-२५) इति।

अनेन जगत्सृष्टयेऽकारविसर्गयोर्द्वैततत्त्वं गृहीतम् । अद्वैतपक्षे केचिद् विसर्गं केचिद्वा अकारं मूलतत्त्वमामनन्ति । विसर्गस्य मूलत्वं शिवशक्त्युभयरूपत्वं च प्रदर्शितं तन्त्रशास्त्रेषु । दिङ्मात्रमुदाह्रियते जगदीशचन्द्रकृतायाः शिवसूत्रविमर्शिनीटिप्पण्याः । यथा—"स (विसर्ग) एव हि परप्रमात्रेकरूपोऽशेषाश्विक्रोडीकारेण अनुत्तरहकारात्मना प्रस्फुरन् अन्तर्बहीरूपतया नरशक्तिशिवात्मतामाभासयेन्—" (२/७५४) इति ।

कैश्चित्त्वकार एवैको वाग्रूपेण गृहीतः । यथोक्तमैतरेयारण्यके—"अकारो वै सर्वा वाक् । सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" (२/३/६) इति ।

उच्चारणविज्ञानेऽप्यकारविसर्गयोस्तुल्यं मूल्यम् । अत एव Phonetics in Ancient India ग्रन्थे W. S. Allen महोदयो वक्ति यद् विसर्गः सर्वाघोषव्यञ्जनार्थमकारश्च सर्वघोषव्यञ्जनार्थमुपयुज्यमानं वायुप्रवाहं प्रयोजयत इति[1] । अस्या उक्तेर्व्याख्यानं खल्वीदृशम्—विसर्गं उच्चार्यमाणे काकले या प्रक्रिया प्रयोज्या भवति, सैव यस्य कस्याप्यघोषव्यञ्जनस्योच्चारणार्थं प्रयोज्या भवति । सकलाघोषव्यञ्जनानां कृते समानभावेन प्रथमं तस्यां प्रक्रियायां जातायां परस्तात्तत्तदघोषव्यञ्जनविशेषाणां कृते पृथक् पृथगुच्चारणप्रक्रियाऽवलम्ब्यते । अनयैव रीत्या यस्य कस्यचिद् घोषव्यञ्जनस्योच्चारणे क्रियमाणे प्रथमं सामान्यतोऽकारोच्चारणप्रक्रियामवलम्ब्य परस्ताद् घोषव्यञ्जनविशेषाणां कृते पृथक्पृथगुच्चारणप्रक्रियाऽऽश्रीयते ।

---

1. विसर्ग is...capable...of providing the appropriate air-stream for the voiceless consonants..., अ is ... capable of providing the appropriate air-stream for the voiced consonants". (part. 2, Section 2.10, p. 60)

अनयोर्द्विविधप्रक्रिययोः श्रवणविज्ञानशास्त्रानुमोदनं प्रदर्शयन् Allen महोदयः Acoustic Phonetics ग्रन्थमुद्धृत्य तत्र वक्ति यत् "प्रागुक्तद्विविधप्रक्रियार्थं काकले द्विविधः शब्दो भवति। प्रथमः खलु स्वाभाविकः शब्दः, द्वितीयस्त्वौच्चारणिकः शब्दः। द्वावेतौ शब्दौ परस्पर-निरपेक्षौ चेति[2]।"

विसर्गस्योच्चारणस्थानमुर इति ऋक्प्रातिशाख्यसंकलितं मतम् (१/१८)। तेन काकलकं पुप्फुसो वाऽस्य स्थानम्। उरःशब्दः काकलकमभिधत्त इति केचित्, पुप्फुसमित्यपि केचिदिति हि प्राक्प्रद-र्शितम्। सिद्धान्तकौमुदी तु (१/१/९ सूत्रस्थ) कण्ठमस्योच्चारणस्थानत्वेन निर्दिशति। पाणिनीयशिक्षा त्वन्यथाऽपि सूचयति। यथा—

"अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" (श्लो. २२) इति। तत्रत्याद् वचनाज् ज्ञायते यदयं यं स्वरमाश्रित्योच्चार्यते तस्य स्वरस्य यदुच्चारणस्थानमस्यापि तदेवोच्चारणस्थानमिति। ए-ऐ-ओ-औ इति सन्ध्यक्षरेभ्योऽनन्तरमुच्चार्यमाणो विसर्गस्तु परस्वरांशस्योच्चारणस्थाना-दुच्चार्यत इति प्रव्यक्तं ब्रूते तैत्तिरीयप्रातिशाख्यं "पूर्वान्तसस्थानो विसर्जनीयः" (२/४८) इति सूत्रेण। अद्यत्वे यथा रामः, हरिः, विष्णुः,

---

2. "We therefore discuss vowel-production on the hypothesis that the glottis emits a spectrum that is independent of supra-glottal articulation, and that the filtering which determines ultimate vowel-spectrum is independent of the glottal adjustment, that is original production and the articulatory production of the glottal tone are entirely independent of each other. The spectrum of the vowel as it exists in the open air is to be reckoned then, as glottal spectrum multiplied for each frequency by the transmission percentage of the articulatory filter." (*Supra*. part II, Section 2.10, p. 60)

इत्यादिकं रामह, हरिहि, विष्णुहु इत्यादिरूपेण विसर्गस्थाने हकारं कृत्वा तदनन्तरं तत्पूर्वस्वरं योजयित्वा केचिदुच्चारयन्ति, तथा प्राचीनकालेऽप्युदचार्यतेति लघुमाध्यन्दिनीयशिक्षाया ज्ञायते । यथा—

> "यथा स्फटिकदण्डादिरुपाधिवशतो भवेत् ।
> तद्वदूष्मा प्रयोक्तव्यो हिहुहेहो निदर्शनम् ।
> वसोः पवित्रं वै तत्र ह्युदाहरणमुच्यते" । (श्लो. २७) इति ।

तैत्तिरीयप्रातिशाख्यस्य च्छन्दोभाषाऽनुसारमस्य करणं नास्ति (२/४६स्थ) । परंतु पूर्ववर्ती स्वरः स च सन्ध्यक्षरश्चेत्तस्य परस्वरांशोऽस्य करणमिति मतान्तरमपि तैत्तिरीयप्रातिशाख्ये संकलितम् (२/४७) । 'कण्ठ्या मध्येन' (१/८४) इति शुक्लयजुःप्रातिशाख्यानुसारं कण्ठ्यत्वाद् विसर्गस्य जिह्वामध्यं करणं भवति ।

ऋक्प्रातिशाख्यं विसर्गस्याभ्यन्तरप्रयत्नमस्पृष्टं स्थितञ्च मन्यते (१३/३) । उच्चारणस्थानकरणयोर्मध्ये संघर्षमूष्माणं च सृष्ट्वा निर्गच्छतो वायोः सत्त्वात्तयोः स्पर्शो न भवति । इमौ च सघर्षोष्माणौ करणस्योच्चारणस्थानोन्मुखत्वेन कियत्कालावस्थानादेव जायेते । अत एवात्रास्पृष्टंस्थितमित्युक्तम् । तेन शषसहतुल्यमयमस्पृष्टस्थितप्रयत्नवानिति फलितम् । परन्तु "नैके कण्ठ्यस्य स्थितमाहुरूष्मणः" इति तत्रैव मतान्तरस्य संकलनादस्यास्पृष्टत्वाभावोऽपि सूचितः ।

महाभाष्य इदं प्रयत्नद्वयमपि ध्वनितम् । तथाहि तत्र (१) अइउण् इति माहेश्वरसूत्रस्याकारात्परं (२) शषसर् इति माहेश्वरसूत्रसमीपे च विसर्गस्य सन्निवेशः कल्पित इति सिद्धान्तकौमुद्या ज्ञायते । यथा— "अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च

पाठस्योपसंख्यातत्वेन......" (८/३/३४ सूत्रस्थ) इति । अस्य प्रथमसन्निवेशानुसारं स्वरत्वादस्पृष्टत्वम्, द्वितीयसन्निवेशानुसारं चोष्मवर्णत्वादस्पृष्टस्थितत्वमायाति। एतस्मिन् पक्षद्वये स्थिते W. S. Allen महोदयः Phonetics in Ancient India ग्रन्थ इममघोषस्वरं ब्रुवन्[3] प्रकारान्तरेणास्यास्पृष्टत्वं स्वीकृतवान्, सर्वेषामपि स्वराणां पाणिनीयशिक्षामतेऽस्पृष्टत्वात् ।

"स्पृष्टं दुःस्पृष्टं वा एवमेके" (ऋ. प्रा. १३/३स्थ) इत्युव्वटभाष्यादस्य स्पृष्टत्वमीषत्स्पृष्टत्वं च प्रतीयते ।

अस्य बाह्यप्रयत्नाः सिद्धान्तकौमुद्यनुसारं विवारश्वासाघोषाः (८/२/१ सूत्रस्थ) । चान्द्रवर्णसूत्रानुसारं महाप्राणोऽपि; "इतरे महाप्राणाः" (सूत्र ३३) इति तत्रोक्तत्वात् ।

विसर्गसम्मिश्रो वर्णो गुरुर्भवति । तथा च श्रुतबोधः—

"संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रम्
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" (श्लो. २) इति ।

## (आ) जिह्वामूलीयोपध्मानीयौ

क-ख-प-फेभ्यः पूर्वं विसर्गो विकल्पेनापूर्णमुच्चार्यते । सः '≍' इति लिख्यते देवनागर्याम् । यथा प्रकृत्या तथैवाकृत्याऽर्धविसर्गसदृशत्वादयमर्धविसर्ग इत्याख्यायते । संस्कृते विशेषतो वैदिकभाषायामर्धविसर्गः

---

3. In fact, विसर्ग sounds may be regarded as breathed (devoiced) vowels, and they might, in very narrow notation, be represented by i̥, ḁ, u̥, ə̥, etc.—(Section 777, chap. 21, p. 201)

प्रयुज्यते। कखाभ्यां पूर्वं प्रयुज्यमानोऽयं जिह्वामूलीय इति, पफाभ्यां पूर्वं चोपध्मानीय इत्यभिधीयते।

तत्र "कवर्गावर्णानुस्वारजिह्वामूलीया जिह्व्या एकेषाम्" (१/५) इत्यापिशलशिक्षा ≍क इति जिह्वामूलीयं जिह्व्यं कथयति। जिह्वामूलीयस्य जिह्वामूलम्" (१/१/९ सूत्रस्थ) इति सिद्धान्तकौमुदी। करणं हनुमूलमिति 'जिह्वामूलीयानुस्वारा हनुमूलेन" (१/८३) इति शुक्लयजुः प्रातिशाख्याज् ज्ञायते। तत्रत्यम् "उवोपोपध्मा ओष्ठे (१/७०), समानस्थानकरणा नासिक्योष्ठ्याः" (१/८०) इति सूत्रद्वयमोष्ठमुपध्मानीयस्य स्थानं करण च निरूतः। अयोगवाहत्वात्पाणिनीयशिक्षानुसार (श्लो. २२) मेतद्द्वयं पूर्ववर्त्तिस्वरेण समानस्थानमित्यपि शक्यते वक्तुम्।

एतयोरणुमात्रकत्वम्;

"अणुमात्रमनुस्वारो ह्युत्तमं चाणुमात्रकम्।
शषसे च कखपफे विसर्गाः सन्ति यत्र च" (श्लो. १८)

इति केशवरामकृतायां पद्यात्मिकायां शिक्षायामुक्तत्वात्, कखपफपरक-विसर्गेऽणुमात्रत्वमित्युक्त्याऽर्धविसर्गस्यैव प्रतीयमानत्वात्।

अनयोर्बाह्यप्रयत्नाः सिद्धान्तकौमुद्यनुसारं विवारश्वासाघोप-महाप्राणाः (८/२/१ सूत्रस्थ)। आभ्यन्तरप्रयत्नस्तु ऋक्प्रातिशाख्यस्यो-व्वटभाष्यानुसारम् (१३/३ स्थ) (क) अस्पृष्टः स्थितः (ख) अस्पृष्टो वा कल्पनीयः। "नैके कण्ठ्यस्य"—इत्यत्र कण्ठ्यस्य, अकण्ठ्यस्य इति विविधमतानुसारं द्विविधपदच्छेदमभिप्रेत्यार्थद्वयकरणात्।

## (इ) अनुस्वारः

स्वर एव स्वारस्तमनुगतोऽनुस्वार इति व्युत्पत्त्याऽस्य स्वरात्पर-मुच्चारितत्वमायाति। वेदेऽनुस्वारस्त्रिविधः, ह्रस्वो दीर्घो गुरुश्च। तत्र

ह्रस्वात्परो दीर्घः। यथा—मुखं किम्। दीर्घात्परो ह्रस्वः। यथा—पद्भ्यां भूमिः। गुरौ परे गुरुः। यथा—संक्षयः। अत्र प्रतिज्ञापरिशिष्टसूत्रस्यानुशासनं तावत्—"तस्य त्रैविध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः" (३/२) इति। कैश्चिद् गुरोरनुस्वारस्य यथायथं ह्रस्वदीर्घानुस्वारयोरन्तर्भावोऽभिमतः।

पाणिनीयशिक्षोक्त-चतुःषष्टिवर्णगणनाप्रसङ्गे शिक्षाप्रकाशकारेण यथैकस्यानुस्वारस्य स्वरूपं प्रकाशितं तेन ज्ञायते यदयं त्रिभाष्यरत्नोक्ताद्रङ्गादनुनासिकाद् वाऽभिन्न इति। शिक्षाप्रकाशे ह्युक्तम्—"स च यथा सुराष्ट्रदेशजाता स्त्री सानुनासिकं रङ्गम् अरॉं इति विद्यमानकंसपात्रशब्दानुकारिणमभिवदति तद्वत् रङ्गं द्वितीयमनुस्वारं जानीयात्" (पृ. ३८६) इति। इदं प्रकृत्या "अनुस्वारस्यानुनासिक्यमात्रत्वमिति त्रिभाष्यरत्नोद्धृतेन मतान्तरेण (२/१६ स्थ) केशवरामकृतपद्यात्मकशिक्षोक्तेन अणुमात्रोऽनुस्वारः" (श्लो. १८) इत्यनेन च संवदति।

शुक्लयजुःप्रातिशाख्ये ह्रस्वपूर्वस्यानुस्वारस्याध्यर्धमात्रिकता, दीर्घपूर्वस्य चार्धमात्रिकता निगदिता। यथा--"अनुस्वारो ह्रस्वपूर्वोऽध्यर्धमात्रा पूर्वा चार्धमात्रा, दीर्घादर्धमात्रा, पूर्वा चाध्यर्धा।" (४/१४८, १४६) इति।

ह्रस्वानुस्वारस्य मात्रा $\frac{3}{4}$ दीर्घानुस्वारस्य च $1\frac{1}{4}$ इति पशुपतिव्याख्या (ऋ. प्रा. १३/१६स्थ)। उव्वटभाष्ये मतान्तरमपि विलोक्यते (ऋ. प्रा. १३/१६स्थ)। तदनुसारं ह्रस्वानुस्वारस्य मात्रा ७/८, दीर्घानुस्वारस्य च १ १/८ इति। याज्ञवल्क्यशिक्षायां त्वन्यथा मात्राविभागः कल्पितः। यथा—

"वर्णे तु मात्रिके पूर्वे अनुस्वारो द्विमात्रिकः
द्विमात्रे मात्रिको ज्ञेयः संयोगाद्य(स्य?) श्च यो भवेत्।

अनुस्वारो द्विमात्रः स्याद्वर्णव्यञ्जनोदये
ह्रस्वाद्वा यदि वा दीर्घाद्देवानाथं हृदये यथा ।
(श्लो. १३८, १३९) इति ।

इत्थम् 'आं' 'अं' इत्यादौ यथाक्रमं वर्तमानौ ह्रस्वदीर्घानुस्वारौ विविधमतानुसारं विविधमात्रां दधाते । एतत्प्रदर्शकं कोष्ठकमधुना दीयते ।

## कोष्ठकम्—१०

## अनुस्वारस्य मात्रायां मतभेदः

| दीर्घस्वरपूर्वकानुस्वारः | ह्रस्वस्वरपूर्वकानुस्वारः | प्रमाणानि |
|---|---|---|
| (१) १/४ | १/४ | त्रिभाष्यरत्नम् (२/१९ सूत्रस्थ) |
| (२) १/२ | १ १/२ | केशवरामकृता पद्यात्मकशिक्षा (श्लो. १८) |
| (३) ३/४ | १ १/४ | शु. य. प्रा. (४/१४८, १४९) |
| (४) ७/८ | १ १/८ | पशुपति व्याख्या (ऋ. प्रा. १३/१६) |
| (५) १ | २ | उव्वटभाष्यम् ( " ) |
| (६) (ऋवर्णोत्तरव्यञ्जनपरकश्चेत्) २ | २ | या. शि. (श्लो. १३८, १३९) |

श्रुतबोधे सानुस्वारस्य वर्णस्य गुरुत्वं प्रतिपादितम् । यथा—"सानुस्वारं विसर्गसम्मिश्रम्" (श्लो. २) इति ।

प्राकृतव्याकरणतन्त्रशास्त्रादावनुस्वारो बिन्दुरित्यभिहितः । यथा—"मो बिन्दुः" (४/१२) इति प्राकृतप्रकाशः । अथ देवनागरीलिप्यां बिन्दुरूपेण लिख्यते । बिन्दोर्विकासे वृत्तं भवति । ओडियाभाषायामनुस्वारस्य लिपिर्वृत्तमेव । इयं चन्द्रवद् वर्तुला । अस्या अर्धमर्धचन्द्रो यत् स्वरेष्वनु-

नासिकत्वस्य चिह्नम् । तच्चिह्नम् ‘ ँ ’ इति । तत्र विन्दुः स्वस्य विकसितं रूपं वृत्तमभिदधत्तदाकारं चन्द्रं सूचयति । ‘ ँ ’ इतिचिह्नं च तस्यार्धत्वं प्रकाशयति । अतएवार्धचन्द्र इति नाम । इदम् ओडियाबेङ्गालीभाषयोश्चन्द्रविन्दुरिति नामितम् । वर्णोद्गमप्रसङ्गेऽर्धेन्दोर्विन्दुराविर्भवतीत्युक्तपूर्वम् । सूक्ष्मात् स्थूलस्थूलतरक्रमेण सृष्टिर्भवतीति शास्त्रविदो वदन्तीत्यर्धचन्द्राद् द्विगुणाकृतिविशिष्टस्य पूर्णचन्द्राकारस्यानुस्वारस्योद्गमे तत्त्वमिदं गर्भीकृतमिति मन्यामहे । इदं त्वाकृतिदृष्ट्या सिद्ध्यति । प्रकृतिदृष्ट्या विचारेऽप्ययमेवार्थ आयाति । यथा—अनुनासिकस्वरस्योच्चारणे नासिकाद्वारेण यावान् वायुर्निर्गच्छति, अनुस्वारोच्चारणे तावतोऽधिको वायुर्निर्गच्छति । अत एव तैत्तिरीयप्रातिशाख्ये—“तीव्रतरमानुनासिक्यमनुस्वारोत्तमेष्विति शैत्यायनः” (१७/१) इत्यनेनानुस्वार आनुनासिक्यस्य तीव्रतरत्वमुक्तम् । अनुनासिकानुस्वारयोरानुनासिक्यं समानम्, अनुस्वारस्यानुनासिक्यमनुनासिकस्वरापेक्षयाऽल्पमिति विरुद्धमतद्वयं च तत्र वर्तते । यथा—“समं सर्वत्रेति कौहलीपुत्रः, अनुस्वारेऽण्विति भारद्वाजः” (१७/२/३) इति च । किन्त्विदं मतद्वयं प्रयोगेण नैव समर्थ्यते । देशकालशाखाभेदानुसारं कुत्रचित् तादृशमुच्चारणं स्यादिति त्वन्यत् । अन्यथाऽनुनासिकस्वरैरेव कार्यसिद्धौ पृथगनुस्वारात्मकवस्तुस्वीकारस्यानौचित्यं स्यात् ।

पुराणेषु यथा विश्वस्य सृष्टिस्थितिप्रलयविषये वर्णनमास्ते, तथा तन्त्रशास्त्रे वर्णानां सृष्ट्यादिविषये । सर्वे वर्णा विसर्गात् प्रादुर्भवन्ति, अनुस्वारे च लीयन्त इत्यहिर्बुध्न्यसहिता । यथा—

“विन्दुः संहार इत्युक्तो विसर्गः सृष्टिरुच्यते” (१६/६६) इति ।

विश्वसृष्टिसंहारयोर्यादृशः क्रमो विद्यते, वर्णसृष्टिसंहारयोरपि तादृश एवेति तत्र प्रतिपादितम् । तथा हि—विश्वसृष्टिसंहारक्रमस्तावत्—विश्वसृष्टेः प्रारम्भे ब्रह्मण आविर्भूता माया विश्वं निर्मिमीते । प्रलयकाले

विश्वं च मायायां लीयते । माया च ब्रह्मणीति नागेशप्रदर्शित उत्पत्ति-विलयक्रमः । यथोक्तं सिद्धान्तमञ्जूषायाम्—"प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणामुपभोगेन प्रलयाल्लीनजगत्का माया चेतने ईश्वरे लीयते । × × × ततोऽपरिपक्वप्राणिरूपकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्विका सृष्टिर्मायापुरुषावाविर्भवतः । ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते" (स्फोटविचार) इति ।

वर्णसृष्टिसंहारक्रमोऽप्यनुरूप एव प्रदर्शितः । यथा—वर्णसृष्टेः प्रारम्भे शक्तिरूपो विसर्गोऽकारं प्राप्य द्विगुणितो ह् इति भवति । ततः स्वरास्ततो व्यञ्जनानि ककारादिसकारान्तानि जायन्ते । (हकारस्य तु स्रष्टृत्वात्सृष्टेषु वर्णेषु तस्य नान्तर्भावः । सर्ववर्णानां संक्षेपरूपः क्षकारोऽपि नैव पृथग् वर्णः । अतः सकारान्तानीत्युक्तम् ।) व्युत्क्रमेण तावत् प्रलयो भवति । ततः सकारादिकं व्यञ्जनं व्युत्क्रमेण ककारे लीयते । ककारस्तदनन्तरं स्वरा व्युत्क्रमेणाकारे लीयन्ते, अकारश्च विन्दौ । अस्य प्रमाण—महिर्बुध्न्यसंहितायां यथा—

"एवंविधा क्रियाशक्तिस्तत्तद्वाच्यविवक्षया ।
शब्दरूपं समास्थाय कूटस्थं व्यक्तिवर्जितम् ॥
सा यात्यनुत्तरं सृष्टा कण्ठे शक्तिर्विसर्गिणी ।
पुनः साऽनुत्तरे स्थित्वा चतुर्दशविभाविनी ॥
अनुत्तरोत्तरा याति कण्ठे हेति विजृम्भणम्
ततः सादिमयी भूत्वा कान्ता व्यञ्जनशालिनी
अनुत्तरमयी भूयो विन्दौ सम्प्रतितिष्ठति ।"

(१६/६३-६६) इति ।

अत्रानुत्तरशब्दो नोत्तर इति व्युत्पत्तियोगात् कस्यापि तत्त्वस्य पश्चाद्भावी नेत्यर्थं प्रकाशयति । सृष्टेः सर्वप्रथमं तत्त्वमिति यावत् । तदुक्तं तत्रैव—

"अ इत्यादिसमुन्मेषः सोऽनुत्तर उदीर्यते" (१६/४५) इति।

विसर्गे शक्तिस्थानीयेऽकारः शिवस्थानीयः। विन्दुस्तु ब्रह्मस्थानीयः। वेत्तीति विन्दुरिति व्युत्पत्तिस्तदेव तत्त्वं परामृशति यद्धि सर्वकारणकारणं भवति। लिपिरूपस्य विचारे विन्दुरेव सर्वप्रथमं तत्त्वम्। तस्मादेव वृत्त-रेखाक्षरादीनि प्रसृतानि। यदा तेषां प्रोच्छनं सम्पाद्यते, तदा न किमपि तिष्ठतीति शून्यं (nothing) तिष्ठतीति वा व्यवहारः। तत्र शून्यं (Zero) तिष्ठतीत्यनेन समं विन्दुस्तिष्ठतीति वाक्यम्। विन्दुशून्ययोः समानरूपत्वात्। तेन शून्यवादिनां बौद्धानामपि मतं संगृह्यते। किं च प्रलये वस्तूनां परमाणुरूपेणावस्थानमिति नैयायिकतत्त्वमपि क्रोडीकरोति विन्दुपदार्थः।

"अनुस्वरयते पश्चार्धेस्वरवदुच्चार्यत इत्यनुसार" इति Critical Studies in the Phonetic Observations धृतया (p. 153) व्युत्पत्त्याऽनुस्वारस्य स्वरत्वं ज्ञायते। परन्तु "अनुस्वारो व्यञ्जनं वा स्वरो वा" (१/११) इति ऋक्प्रातिशाख्येऽस्य स्वरव्यञ्जनोभयत्वं स्वीकृतम्। तत्र हेतुरित्थं प्रकटित उव्वटभाष्ये"—स कांश्चिन् स्वरधर्मान् गृह्णाति, कांश्चिच्च व्यञ्जनधर्मान्। तद् यथा—ह्रस्वत्वं दीर्घत्वं प्लुतत्वमुदात्तत्वा-नुदात्तत्वं स्वरितत्वमिति स्वरधर्माः, तथा अर्द्धमात्राकालता स्वरवशे-नोदात्तता अनुदात्तता स्वरितता संयोगश्चेति व्यञ्जनधर्माः" (ऋ. प्रा. १/१२ सूत्रस्थ) इति।

कात्यायनपतञ्जलिमतेऽप्येवम्। तेन महाभाष्ये "अयोगवाहा-नामट्सु णत्वम्, शर्षु जश्भावषत्वे" (पञ्चममाहेश्वरसूत्रस्थ) इति लिखितम्। अट्सु अइउण्सूत्रेऽकारोत्तरं पाठादयोगवाहविशेषस्यानु-स्वारस्य स्वरत्वमूष्मव्यञ्जनानां शषसानां सविधे च पाठाद् व्यञ्जनत्वं च सिध्यतीति भावः। संस्कर्ता इति पदस्य संस्कर्ता इत्यनुस्वारद्वयघटितं रूपमस्ति। अत्रानुस्वारस्य यर्प्रत्याहारान्तर्गतव्यञ्जनत्वान् "अनचि च"

(८/४/४७) इत्यष्टाध्यायीसूत्रेण द्वित्वं भवति। संस्स्कर्ता इति त्रिसकारघटितं रूपान्तरमप्यस्ति, यत्रानुस्वारस्य स्वरत्वात् (=अच्त्वात्) तत्परकस्य सकारस्य तेनैव सूत्रेण द्वित्वं भवति। एतन्निरूपितं सिद्धान्तकौमुद्याम्। यथा—"तत्रानचि चेति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम्। अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यातत्वेनानुस्वारस्याप्यच्त्वात्। अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश" (८/३/३४) सूत्रस्थ) इति।

अनुस्वारो नैव स्वरः, नापि व्यञ्जनम्, अपि तूभयधर्मकं वर्णान्तरमित्युव्वटभाष्यमाशेते। तत्रोक्तम्—"तस्मात्स्वरव्यञ्जनातिरिक्तमन्यद्वर्णान्तरमेतदित्येतद्व्याख्यापनपरमेवैतत् सूत्रमिति सिद्धान्तितम्" (ऋ. प्रा. १/११ श्लोकस्थ) इति।

Critical Studies in the Phonetic Observations धृते वैदिकाभरणे मतान्तरमुपलभ्यते। एतन्मतेऽनुस्वारोऽर्धगकाररूपो वर्ग्यपञ्चमवर्णवदुच्चार्यते। तथा चोक्तम्—"अनुस्वारोऽप्युत्तमवद् व्यञ्जनमेवास्मच्छाखायामर्धगकाररूपत्वात्" (foot note, p. 151) इति।

"यजुष्यनुस्वार इहापि यत्र भवेत्तदाद्यर्धगकारयुक्तः"

इति याजुषभूषणमप्येतदेव स्वीकरोतीति तस्मादेव ग्रन्थाज् (p. 153) ज्ञायते।

यदा संस्कृतोत्पन्नास्वाधुनिकभाषास्वेकत्रानुस्वारस्यैकमुच्चारणरूपमन्यत्र चान्यद्रूपं पश्यामस्तदा प्राचीनसमये पूर्वोक्तमुच्चारणद्वयमासीदित्यनुमानं दृढतरं भवति। यथा—

(क) गकारासंकीर्णमुच्चारणम् ओडियाहिन्दीप्रभृतिषूपलभ्यते। तास्वनुस्वारस्योच्चारणं 'म्' इत्यस्योच्चारणानुरूपम्।

(ख) वेङ्गालीभाषायामनुस्वारोच्चारणवेलायां गकारसंकीर्णं रूपं श्रूयते। अतो वेङ्गालीभाषिणोऽनुस्वारार्थम् 'ο' इति विलिख्य

तदधः स्वरहीनव्यञ्जनस्य चिह्नम '्' इति कुर्वन्ति। यथा—"ং"। ततश्चार्धगकारमुच्चारयन्ति। यथा বাংলা = बांग्ला। अत्रानुस्वारस्य सम्यगुच्चारणाभावादनुस्वारं विहाय तत्स्थाने पूर्ववर्ती स्वरोऽनुनासिकीकृतः।

(ग) वेङ्गालीप्रभावाद् बालेश्वरवासिनामप्यनुस्वारोच्चारणेऽज्ञातभावेनार्धगकारः प्रविशति। तस्मात्ते 'मांस' मुच्चारयन्तो 'माँग्स' इति कुर्वन्ति।

(घ) "अथानुस्वारस्य ꣳमित्यादेशः शषसहरेफेषु" (३/१) इति प्रतिज्ञापरिशिष्टसूत्रस्यानुशासनम्। अद्यत्वे तदनुसृत्य पठन्तः ꣳ इत्यस्य स्थाने गुँ इति कुर्वन्ति। यथा—पशूꣳ स्ताꣳ श्चक्रे > पशू गुँ स्ता गुँ श्चक्रे इति। वस्तुतस्त्वयमनुस्वारस्य रूपान्तरमेव, नतु ꣳ इति पृथगक्षरम्। अस्योच्चारणविषये पाणिनीयशिक्षा—

"अलाबुवीणानिर्घोषो दन्तमूल्यः स्वरानुगः।
अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च" (श्लो.२३) इति।

'ꣳ' इति लिपिर्ह्रस्वानुस्वारस्थानापन्ना। दीर्घानुस्वारस्थानापन्ना लिपिस्तु 'ꣴ' इत्याकारा। यथा—गणपतिꣴ हवामहे इति। अद्यत्वेऽवहिता एवैतं विशेषं गृह्णन्ति।

हकारेऽनुस्वारात् परवर्तिनि सति मध्ये प्रायशो गकारः श्रूयते। केचिल्लेखनकालेऽपि तल्लिखन्ति। यथा—सिंह > सिंघ, Singha.

एषु स्थलेष्वनुस्वारस्य गस्य च तिलतण्डुलन्यायेन मिश्रणं नः प्रतिभाति। तेनैतौ द्वौ पृथक्कृत्याप्युच्चारयितुं शक्येते। एतयोर्नीरक्षीरन्यायेन मिश्रणे तु ङकारः सम्पद्यते। ङकाराद् गकारः पृथक्कर्तुं न शक्यते। पुरा वङ्गीयाः स्वभाषाया नाम 'বাংলা' इति नैवालिखन्, परन्तु

'वाङ्ला' इत्येवालिखन् । "गकारङकारौ समौ, भेदस्तु ङकार आनुनासिक्यमधिकमिति प्रकाशयन्त्यापिशलशिक्षा (४/६,७) प्रकृतेऽनुस्वारगकारयोर्मिश्रणेन ङकारभावं सम्यगनुभावयति ।

Critical Studies in the Phonetic Observations—धृता सिद्धान्तशिक्षा वेदे 'त्वम्' इत्यत्र मकारस्थाने 'ङ' इति दृष्ट्वा तद्विषये कथ्यते—"त्वमित्यस्य वा ङकारोऽन्तादेशश्छान्दस इति अस्यार्थः" (foot note, p. 152) इति । अत्रापि मकारस्य प्रथममनुस्वारत्वम्, ततो गकारागमः, ततो नीरक्षीरन्यायेनानुस्वारगकारयोर्मेलने ङकार इति प्रक्रियाऽभ्युपेया । "केचिदनुस्वारस्य स्थाने तावत् ङकारं जनयन्ति, तस्मात् ङकारात्परं ककारमन्तःपातं जनयन्ति" । (ऋ. प्रा. १३/७ श्लोकस्थ) इति पशुपतिव्याख्या हवींषि इत्यत्र हवीङ्क्षि इत्युच्चारणमभिलक्ष्य प्रवृत्ता । पूर्वनिर्दिष्टनीत्याऽनुस्वारस्थाने ङकारे जाते "ङ्णोः कुक्टुक् शरि" (८/३/२८) इत्यष्टाध्यायीसूत्रेण कुगागमे च तादृशोच्चारणं समाहितं भवत्येव ।

एतद्वैपरीत्येन प्रकृतेऽनुनासिकस्वरगकारयोर्विद्यमानयोरपि कुत्रचित् केवलं ङकार उच्चार्यते । यथा इङ्लिश् Strong शब्दः स्ट्रङ् इत्युच्चार्यते । अत्र n, g इत्येतयोः स्थाने एतदुभयवर्णधर्मविशिष्टो ङवर्णः समापततीति growth and Structure of the English Language इत्याख्य ग्रन्थे परिशीलितम्[4] ।

4. "......The Final consonant groups have also been simplified in-ng, for instance, in strong, where now only one consonant is heard after the vowel, a consonant partaking of the nature of n and of g, but identical with neither of them. Formerly it was followed by real 'g', which has been retained in 'stronger'" (Section 5, chap. 1, p. 4)

अनुस्वारस्यैवंविधविविधोच्चारणानां वैज्ञानिककारणेऽनुसंधीयमाने ज्ञायते यत्—मुखविवरस्य विविधमार्गेषु वायुमार्गनिरोधादेवंविधान्युच्चारणानि भवन्ति । यथा—

(क) मकार उच्चार्यमाण ओष्ठौ परस्परं मिलितौ वायुप्रवाहं क्षणमवरुन्धः, एतत्पूर्वं मुखविवरे तस्य न कोऽपि प्रतिबन्धो भवति । अनुस्वारस्योच्चारणेऽपि यदि तथा मुखविवरे प्रतिबन्धराहित्यं स्यात्तदा सोऽपि मकारवदुच्चार्येत ।

(ख) यदि पश्चाज्जिह्वोत्थिता सती श्लक्ष्णतालुना मिलति, तदा ङकारोच्चारणस्थित्यां वर्तमानोऽनुस्वारो ङकारवदुच्चार्यते ।

(ग) ङकारोच्चारणेऽधिजिह्वा नासारन्ध्रमुन्मुक्तं विदधाति, पश्चाज्जिह्वा च श्लक्ष्णतालुनि स्थिता क्षणं मुखद्वारमवरुध्योन्मुञ्चति । इत्थं ङकारोच्चारणसमाप्तावधिजिह्वा नासारन्ध्रमाच्छादयति पश्चाज्जिह्वा च श्लक्ष्णतालुनः स्खलिता भवति । तदानीमवरुद्धवायुप्रवाहस्य कश्चिदंशो मुखविवरमार्गेण निर्गच्छति । फलतः ककारो गकारो वा श्रूयते । तत्रानुस्वारङकारयोर्घोषवर्णत्वात्तयोः प्रभावात्परवर्तिनो घोषवर्णस्य प्रभावाद्वा गकारोच्चारणम्; तादृशप्रभावराहित्ये परवर्तिनोऽघोषवर्णस्य प्रभावे सति वा ककारोच्चारणम् ।

(घ) यदा तु नकारोच्चारण इव दन्तमूले न्यस्ता भवति जिह्वा, तदा नकारसदृशं भवत्यनुस्वारस्योच्चारणम् । एतेन यशान्+सि इत्यस्य सन्धौ यशांसि इति सिद्धिः समर्थिता भवति ।

"व्यालिर्नासिक्यमनुनासिकं वा" (१३/१५) इति ऋक्प्रातिशाख्यानुसारं नासिक्यत्वपक्षे नासिकाऽस्योच्चारणस्थानम्, अनुनासिक-

त्वपक्षे च मुखसहिता नासिका । शाकटायनप्रक्रियासंग्रहे "कण्ठनासिक्य-मेकेषाम्" (पृ. ४) इत्युच्चारणस्थानविषये मतान्तरं संकलितम् ।

आपिशलशिक्षायामनुस्वारस्य जिह्वा स्थानं निगदितम् (१/५) । तत्र च "जिह्वामूलेन जिह्वयानाम्" (२/४) इति जिह्वामूलं करणत्वेन प्रोक्तम् । शुक्लयजुः प्रातिशाख्ये त्वस्य करणं हनुमूलमिति कथितम् । यथा—"जिह्वामूलीयानुस्वारा हनुमूलेन" (१/८३) इति । अनुस्वारोच्चारणेऽधिकतरवायोरुपयोगादयमूष्मवर्णेष्वन्तर्भावित ऋक्प्रातिशाख्ये । तत्र कारणं तु पशुपतिव्याख्यानुसारं नागेशादिमतेन चोष्मा नाम वायुस्तत्प्रधानत्वम् । एतदूष्मवर्णमध्येऽनन्तर्भावयतां तैत्तिरीयप्रातिशाख्यादीनामुच्चारण त्वन्यादृशमेव । अस्योच्चारणे पश्चाज्जिह्वा हन्वोर्निक्षिप्यत इति त्रिभाष्यरत्नस्य दर्शनम् । यथा—"अनुस्वारे हन्वोरुपसंहारः" (२/१६ सूत्रस्थ) इति । सानुस्वारो वर्णः सविसर्गइव गुरुर्निगदितः श्रुतबोध (श्लो. २) ।

अस्याभ्यन्तरप्रयत्न ऋक्प्रातिशाख्यमतेनास्पृष्टम् (१३/३), उव्वट-भाष्यमतेन चार्धस्पृष्टम् (शु. य. प्रा. १/७२सूत्रस्थ) बाह्यप्रयत्नाश्च सिद्धान्त-कौमुद्यनुसारं संवारनादघोषाः (८/२/१सूत्रस्थ) ऋक्प्रातिशाख्य त्वस्या-घोषप्रयत्नमाह (१/१२) ।

## (ई) नासिक्यः

"हुं इति नासिक्यः" (८/१३) इति शुक्लयजुःप्रातिशाख्ये नासिक्यस्य स्वरूपं प्रकाशितम् । वह् (हुं) निः* । प्राह्नि (हुं) णः ब्रह् (हुं)-म इत्यादौ "हकारान्नणमपरा नासिक्यम्" (२१/२४) इति तैत्तिरीयप्राति-शाख्यं नासिक्यं विदधाति । अत्र हकारस्य द्वित्वश्रुतिः परवर्त्यनुनासिक-

*अस्मिन् सन्दर्भे प्राचीनग्रन्थप्रयोगरीत्या द्वित्वाभासा (=यमनासिक्याः) स्वरांशा (=स्वरभक्तय)-श्च क्षुद्रलिपिका बन्धनीबद्धाश्च कृताः ।

व्यञ्जनप्रभावात् 'उ' इति स्वरांशश्रुतिश्च मिलित्वा हुं इति भवति। अत्र प्रमाणम् "हकारान्नासिक्येन" (१/१००) इत्यथर्वप्रातिशाख्यम्। तैत्तिरीय-प्रातिशाख्ये नासिकयोच्चार्यमाण इति यौगिकार्थेऽस्य शब्दस्य प्रयोगो दृश्यते। यथा "नासिक्या नासिकास्थानाः" (२/४६) इति। अपरत्र च यमार्थे। यथा—"स्पर्शादनुत्तमादुत्तमपरादानुपूर्व्यान्नासिक्याः, तान् यमानेके" (तै. प्रा. २१/१२/१३) इति। अस्योच्चारणस्थानं नासिकेति शुक्ल-यजुःप्रातिशाख्यम् (१/७४)। करणमपि तन्मते नासिकैव। यथा—"समान-स्थानकरणा नासिक्योष्ठ्याः" (१/८०) इति। प्रयत्नविषये न काऽपि चर्चा परिलक्ष्यते। वेद एवास्य व्यवहारक्षेत्रम्।

## (उ) यमाः

इमेऽपि वेद एव व्यवह्रियन्ते। यमशब्दो यमलार्थः। युग्मार्थक इति यावत्। अत्र त्वेतत्पदस्यार्थो द्वित्वाभासो द्वित्वश्रुतिर्वा। यमानां क्षेत्रमृक्प्रातिशाख्ये निरूपितम्। यथा—

"स्पर्शा यमाननुनासिकाः स्वान्
परेषु स्पर्शेष्वनुनासिकेषु" (६/८) इति।

अननुनासिकवर्ग्यवर्णात्परमनुनासिके वर्ग्यवर्णे विद्यमाने मध्ये पूर्ववर्ण-सदृशाः केचिद्वर्णा आपतन्ति ; ते यमा इत्यभिधीयन्त इति तदर्थः। प्राति-शाख्यप्रदीपशिक्षाया बुध्यते यत् केचिद् यमानां लिपावस्तित्वं स्वीकुर्वन्तो-ऽप्युच्चारणं नैव स्वीकुर्वन्ति। तथा चोक्तम्—"न त्वेषामुच्चारणम्। अशरीरं यमं प्राहुरिति शिक्षायामुक्तत्वात्केवलं ज्ञानमात्रफलम्" (पृ. २५२) इति। एतद्वैपरीत्येन उपज् (ज) मन प्रभृत्युदाहरणेषु वन्धनीमध्ये प्रदीयमानं लिपिरूपमस्वीकृत्य केवलमुच्चारणरूपं च स्वीकृत्यामोघानन्दिनीशिक्षाया-मस्य शून्यगृहे गर्जताऽदृश्यपिशाचेन सार्धं तुलना कृता। यथा—

"शून्ये गृहे पिशाचोऽपि गर्जते न च दृश्यते
एवं वर्णाः प्रयोक्तव्या उपज्मन्निति निदर्शनम्"
(श्लो. ५०) इति ।

शुक्लयजुःप्रातिशाख्ये यम इति शब्दो नास्ति । तत्स्थाने विच्छेद इति शब्दः प्रदत्तः । तथा च तत्रत्यं सूत्रम्—

"अन्तःपदेऽपञ्चमाः पञ्चमेषु विच्छेदम्" (४/१३१) इति ।

अपञ्चमवर्ग्यवर्णस्योच्चारणानन्तरं क्षणं विरम्य पञ्चमवर्णं उच्चार्यते । अतोऽत्रोच्चारणधाराविच्छेदो भवति । विच्छेदे च सति पूर्ववर्णसदृशस्यापूर्णयमवर्णस्योच्चारणं भवतीति तादृशोच्चारणस्य विच्छेदजन्यत्वाद् विच्छेद इति नामकरणं प्रतीमः । यमार्थे नासिक्यशब्दोऽपि तैत्तिरीयप्रातिशाख्ये व्यवहृत इत्युक्तम् । तत्र हेतुर्यमेष्वनुनासिकस्वरोच्चारणम् । तथाहि—

"........यमान्नासिक्या स्वरभक्तिरुत्तरा ।
गार्ग्यस्य............" (६/१०)

इति ऋक्प्रातिशाख्यं यमवर्णानन्तरमेकां नासिकोच्चार्यमाणां स्वरभक्तिमनुशास्ति । अत्र श्लोके यमादिति नासिक्यस्योपलक्षणमिति मन्तुं शक्यम् । तेन 'हु' इत्यत्र 'उ' इति स्वरभक्तेः संग्रहः । स्वरभक्तिर्नाम स्वरस्य भग्नांशः । (एतद्विषयेऽग्रे विशिष्य विवेचनं विहितम् ।) यमानामुदाहरणानि—पलिक् (कुँ) नी, चख् (खुँ) नतुः, अग् (गुँ) निः, घ्(घुँ)नन्ति । एत एव चत्वारः प्रसिद्धा यमवर्णाः । यज्ञ् (ज्) ञ इति शुक्लयजुःप्रातिशाख्यप्रदर्शितोदाहरणे तु 'जुँ' इति यमो 'विंशतिर्यमाः' इति वादिनां मतेन भवति । तेषां मते हि कुँ खुँ गुँ घुँ चुँ छुँ जुँ झुँ टुँ ठुँ डुँ ढुँ तुँ थुँ दुँ धुँ पुँ फुँ बुँ भुँ इति यमानां संख्या विंशतिः । तदुक्तं शुक्लयजुः प्रातिशाख्यस्योव्वटभाष्ये—"इति यमसंज्ञका वर्णा विंशतिसंख्यका

भवन्ति—" (८/१४स्थ) इति। परन्तु यमाश्चत्वार एवेति बहवः। यथा—ऋक्प्रातिशाख्यस्योव्वटभाष्यम्—"स्पर्शा यमाननुनासिकान् स्वा"नित्युच्यमाने विंशतित्वात् स्थानिनामादेशानामपि विंशतित्वप्रसङ्गः, समाभून्। चतुर्णामेव यमानां प्रथमाः प्रथमं द्वितीया द्वितीयम् एवमापञ्चमादापद्य रन्नित्युच्यते" (६/८स्थ) इति।

यमानामादेशत्वमागमत्वं चेति पक्षद्वयम्। तत्रादेशत्वपक्षः शब्दकौस्तुभे खण्डितः। शिक्षाप्रकाशे विविधग्रन्थकारमतोद्धारपुरःसरम् "अयमपि वर्णागमो विधीयतेऽस्माच्छास्त्रात्" (पृ. ३८८) इत्यागमपक्षः साधितः। वस्तुतस्तु अस्याविकसितवर्णत्वाच्छु 'तद्रूपेण ग्रहणं समीचीनं भवेत्।

यमानां कृते विविधलेखो विहितः। यथा—कुं खुं गुं घुं—कुँ खुँ गुँ घुँ—कँ खँ गँ घँ इति। प्रकृते तु यमानां स्वरभक्तीनां नासिक्यानां च कृते न काऽपि स्वतन्त्रा लिपिर्विद्यते। अत ईदृशलेखो यादृच्छिक एव, तस्मादपूर्णः। यमवर्णानामविकसितं रूपमेवेदृशव्यवहारवैविध्ये बीजम्। तस्मात् पाराशरीशिक्षायाम् "अशरीरं यमं प्राहुः" (श्लो. ५८) इत्युक्तम्। उव्वटभाष्ये यमविषये कश्चिद्विशेषोऽभिहितः। यथा—"रुक् (क्) म इत्यत्र "'स्वरात्संयोगादि'—रित्यादिना ककारस्य द्विर्भावे कृतेऽनेन सूत्रेण द्वितीयस्य ककारस्य यम इत्ययं कार्यक्रमः क्रियते" (शु. य. प्रा. ४/१६१ सूत्रस्थ) इति। एतदनुसारं प्रथमतो द्वित्वं भवति, ततो यमत्वमिति।

यमान् स्वतन्त्रवर्णान् मन्यमानेषु शुक्लयजुःप्रातिशाख्यकार एषां स्थानं नासिकां मन्यते (१/७४)। तैत्तिरीयप्रातिशाख्यं तु "मुखनासिक्या वा" (२/५०) इति मतान्तरं संकलयति। "यमाश्च नासिक्यजिह्वामूलीया एकेषाम्" (२/१६) इत्यापिशलशिक्षा वदति। अस्य प्रयत्नविषये न किमप्युक्तम्। तथाऽप्यनुपदकृतविवेचनदृष्ट्या स्पृष्टमस्याभ्यन्तरप्रयत्न इति निरूपयितुं शक्यम्। बाह्यप्रयत्नाश्चास्मदीयमानकोष्ठकानुसारं भविष्यन्ति।

## कोष्ठकम्—११

## यमानां बाह्यप्रयत्नसूची

| यमाः | बाह्यप्रयत्नाः | | | |
|---|---|---|---|---|
| कुँ चुँ ञुँ तुँ पुँ | अल्पप्राणः | विवारः | ईषच्छ्वासः | अघोषः |
| खुँ छुँ ठुँ थुँ फुँ | महाप्राणः | विवारः | श्वासः | अघोषः |
| गुँ जुँ डुँ दुँ बुँ | अल्पप्राणः | संवारः | ईषन्नादः | घोषः |
| घुँ झुँ ढुँ धुँ भुँ | महाप्राणः | संवारः | नादः | घोषः |

### (ऊ) ॠ–ॡ

होतृ+ऋकारः, होतृ+लृकारः इत्युदाहरणयोः "अकः सवर्णे दीर्घः (६/१/१०१) इत्यष्टाध्यायीसूत्रेण दीर्घॠकारो भवति । अयं द्विमात्रकः । अत्र कात्यायनेन "ऋति सवर्णे ऋ वा" "लृति सवर्णे लृ वा" इति वार्त्तिकाभ्यामन्यविधौ द्विमात्रकौ ऋॢ इत्येतौ विहितौ । इमौ स्वरौ न भवतः । एतौ चायोगवाहरूपेणोपलक्षितौ शब्दकौस्तुभे ऽयोगवाहगणना-प्रसङ्गे । यथा—"ते च विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वार-नासिक्ययमाः इति भाष्यम् । एतच्च ऋति ऋ वा (का. वा.) लृति लृ वा (का. वा.) इति विहितयोरीषत्स्पृष्टयोरप्युपलक्षणम्" (पृ. ५३, ५४) इति । नान्यत्र कुत्राप्यनयोरयोगवाहता निर्णीता दृश्यते । अत्र रलयोरंशस्य कल्पितत्वादेतौ यथाक्रमं मूर्ध्नो दन्ताच्चोच्चार्येते । अनयोराभ्यन्तरप्रयत्न ईषत्स्पृष्टम्, बाह्यप्रयत्नश्च संवारनादघोषाल्पप्राणाः ।

## (ऋ) रङ्गः

अस्य विषये वैदिकग्रन्थेषु विवेचनमस्पष्टं बहुत्रैमत्यग्रस्तं च। तत्राप्यनुशासनेषु पाठभेदा वेदभेदेषूच्चारणभेदाश्च । अतोऽत्र यथामति प्रदर्श्यते । "नासिकाविवरणादानुनासिक्यमिति रङ्ग उक्तः" (१/१सूत्रस्य) इति त्रिभाष्यरत्ने पृथग्वर्णरूपेणेमं गृहीत्वा वर्णानां षष्टि-संख्या पूरिता। तत्रैवाकारादीनां स्वराणां पृथगुक्त्या नायं तेष्वन्तर्भवति। नाप्यनुस्वारे, "अनुस्वारश्चेति सूत्रेणानुस्वार उक्तः" इत्यनुस्वारस्यापि पृथग्वर्णरूपेण गणनात्। तेनायं पृथग्वर्णः सिद्ध्यति।

रज्यत इति रङ्गः। शुक्लस्य स्फटिकादेः समीपे स्थितानां नीलादि-वर्णविशिष्टानां पदार्थानां नीलपीतादिरङ्गेण रञ्जनं भवति। तादृश रङ्गेण रञ्जनं नात्रोद्दिष्टम् । अत्र तु मुखोच्चारितस्य वर्णस्य नासिकोच्चारणेन वैशिष्ट्यापादनमभीप्सितम् । यथा तत्र नीलेतरस्य स्फटिकादेर्नीलादि-गुणान्तरग्रहणं तथाऽत्र मुखोच्चारितस्यानासिक्यवर्णस्य नासिक्यगुण-ग्रहणमिति साम्यमत्र रङ्गेति नामकरणे बीजम्। * उदाहरणम्—महाँ२ ॥ऽइन्द्रो व्वज्रहस्तः इत्यत्र आँ इति । अत्र कण्ठ्यस्याकारस्य नासिक्यगुणग्रहणम्।

याज्ञवल्क्यशिक्षानुसारं रङ्गोऽन्यः, अनुनासिकश्चान्यः । रङ्गवद् आँ इतीदमनुनासिकस्वरस्याप्युदाहरणम्। परन्त्वनयोरुच्चारणे भेदोऽस्ति। रङ्गे हि प्रथमतो रङ्गाश्रयस्वरस्य मुखेनोच्चारणं ततश्चानुनासिक्यम् । अनुनासिके तु मूलत एवानुनासिक्यम्। रङ्गलक्षणमुक्तं याज्ञवल्क्येन—

"रङ्गे चैव समुत्पन्ने नो ग्रसेत्पूर्वमक्षरम्
स्वरं दीर्घं प्रयुञ्जीत पश्चान्नासिक्यमाचरेत्"

(श्लो. १८९) इति।

---

* सङ्गीतप्रसिद्धे रागशब्दे, "तत्र रक्तं नाम वेणुवीणास्वराणामेकीभावे रक्तमित्युच्यते" इति नारदीशिक्षायां (१/३/१) लक्षिते रक्ताख्यगाने, लोकव्यवहृते 'मनोरञ्जन'प्रभृतिशब्दे च रञ्जधातोरेवं विधार्थकत्वम्।

तद्भिन्नमनुनासिकं स्वरं सर्वानुनासिकपदेनाख्याय तस्य मध्योपधानिका-नाम्ना (पाठान्तरानुसारम्) उपधानिकानाम्ना वाऽभिधानं तेनैव कृतम्, रङ्गापेक्षया विविक्तविषयता च प्रकाशिता। यथा—

"अनन्तरं मकारस्य यो रङ्गस्तत्र दृश्यते।
सर्वानुनासिकं विद्यादेषा मध्योपधानिका (मन्योपधानिका)"
(या. शि. श्लो. ६२) इति।

प्रातिशाख्यकीर्तिप्रकाशे (३/१४३सूत्रस्थ) अस्यार्थेऽन्यथा प्रतिपादितेऽपि 'अनन्तरं मकारस्य' इत्यनेन वर्णमालायां मकाराग्रस्था यरलवशषसहा इत्यभिप्रायोऽत्रत्यशिक्षावल्लीटीकायां प्रकटितः। तेन—

"य-र-ल-वाः शषसहा रज्यन्ते चोपधानिकाः
वर्गान्ते रङ्क्ते यस्तु सर्वैः सर्वानुनासिकः"॥
(या. शि. श्लो. ६३)

इति परवर्त्तिना श्लोकेन प्रथमश्लोकस्य फलितार्थकथनमभ्युपेतम्। अस्या उपधानिकाया अनुनासिकस्य वोदाहरणम्—रासभँ य्युवमिति।

किञ्च सर्वेषां वर्णानां शरीररङ्गाभिधानप्रसङ्गे "रङ्गः शवलः। आनुनासिक्योऽतिनीलः" इति तेनैव रङ्गानुनासिकयो रूपभेदनिबन्धनं पार्थक्यं प्रकाशितम्।

अपि च "रङ्गो नाम स्वरयोरन्तरा 'न' कारस्य लोपादौ विकारे उपधानुनासिक्यञ्च" इति प्रातिशाख्यकीर्त्तिप्रकाशानुसारं (३/१४४ स्थ) यत्र नकारविकारे सत्युपधारञ्जनं तत्रैव रङ्गो भवति। शिक्षावल्ल्याञ्च (या. शि. ३/७१स्थ) "नकारमकारयोर्विकारेणोत्पन्नः शाखान्तरे नमयोर्लोपेन च" इति व्याख्यानान्नकारमकारविकारे नकारमकारलोपे वा रङ्गो

भवतीति ज्ञायते । एतदुभयानुसारम् "अणोऽप्रगृह्यस्यानुनासिकः" (८/४/५७) इत्यष्टाध्यायीसूत्रेण 'दधिँ' इत्यादिषु विहितस्यानुनासिकत्वमेव, न तु रङ्गत्वम् ; तत्र नकारमकारयोर्लोपविकारान्यतरत्वाभावात् ।

नासिकाकृतरञ्जनयोगादनुनासिकप्रसङ्गेऽपि याज्ञवल्क्यशिक्षायां रङ्गः, रङ्गते, इति शब्दद्वयमुपात्तम् । "रक्तसंज्ञोऽनुनासिकः" (ऋ. प्रा. १/१७) इत्यत्रापि रक्तसंज्ञाभिधान इदमेव बीजम् । क्वचिद्रङ्गेति स्वतन्त्रं नाम नास्ति । अनुनासिकशब्दस्तत्स्थानेऽपि प्रयुज्यते । यथा—पाणिनिकृताष्टाध्याय्याम् । तत्र हि 'महाँ२ँ॥ऽइन्द्रो वज्रहस्तः इत्यादौ 'अत्रानुनासिकः पूर्वस्य तु वा' (८/३/२) इति सूत्रेणानुनासिक्यमेव विधीयते, न तु रङ्गः । अष्टाध्याय्यामिव प्रातिशाख्येष्वपि रङ्गशब्दो नैव विलोक्यते ।

रङ्गोऽर्धानुस्वार इति कथ्यते । यथा—शिक्षावल्ल्यां याज्ञवल्क्यशिक्षायाः ३/७० श्लोकव्याख्यावसरे । अस्य चिह्नमनुनासिकवत् 'ँ' इति । अयमप्यर्धचन्द्रशब्देनाख्यायते । यथा—पाराशरीशिक्षायाम्—

"अर्धचन्द्रं तदुपरि ह्यघोषाः पुरतः स्थिताः"

(श्लो. ४५) इति ॥

न केवलं रङ्गानुनासिकयोः, अपितु नासिक्यत्वहेतो रङ्गानुस्वारयोरप्यैक्यं कैश्चिद् गृह्यते । यथा—"रङ्गं द्वितीयमनुस्वारं जानीयात्" इति शिक्षाप्रकाशः (पृ ३८६) ।

शंसिते रङ्गस्य याज्ञवल्क्यशिक्षोक्तस्वरूपेऽनाग्रहिणस्तु रङ्गमुदाहरन्तो वस्तुतोऽनुनासिकमेवोदाहरन्ति । यथा—Critical Studies in the Phonetic Observations धृतः (Chap. 9, p. 150) शिक्षापाठाख्यग्रन्थः—

"यथेन्द्रनीलप्रभयाऽभिभूतो
मुक्तामणिर्याति हि नीलभावम् ।
तथैव नासिक्यगुणेन युक्तः
स्वरोऽपि रङ्गत्वमुपैति कृत्स्नः" इति ॥

अत्रोपमया 'कृत्स्न' इति पदेन च वस्तुत आनुनासिक्यमेव लक्ष्यते, न तु रङ्गः । तथाह्यत्र रङ्गाश्रयस्य कृत्स्नस्य स्वरस्य नासिक्यगुणेन ग्रासस्य प्रतिपादितत्वाद्याज्ञवल्क्यशिक्षोक्तेन 'न ग्रसेत् पूर्वमक्षर' मित्यनेन 'पश्चान्नासिक्यमाचरे'दित्यनेन च तस्य विरोधो दुर्वार एव भवति । याज्ञवल्क्यशिक्षोक्तोपमा त्वत्र साधीयसी प्रतिभाति । सा यथा—

"यादृशी रत्नवर्णाभा जपायाः कुसुमेऽथ वा
तादृशं रञ्जयेद् वर्णं प्रान्ते नासिक्यमाचरेत्"
(श्लो. २१६) इति ।

अस्य श्लोकस्य व्याख्यायां शिक्षावल्ल्यामत्रत्योपमानोपमयभाव इत्थं स्पष्टीकृतः—"यादृशी रत्नस्य माणिक्यस्य वर्णाभा विरलरक्तच्छविः । अथवा जपायाः लोके 'हुड हुड' इति प्रसिद्धस्य कुसुमे पुष्पे विरलरक्तता अस्तीति शेषः । तादृशं विरलानुनासिक्यम् वर्णमुपधास्वरम् रञ्जयेत् उपधादेशे नासिक्यं कुर्यात् । तदेव स्पष्टयति—स्वरस्य प्रान्ते नासिक्यमर्धानुस्वारमेकमात्रिकमाचरेम् वदेत् । न तु उपधामेव सर्वनासिकां कृत्वा वदेदित्यर्थः । जपाकुसुमे रक्तिमा यथा मूले नास्ति, प्रान्तभाग एव घनीभूता दृश्यते तथैवोपधानिका उच्चार्या इति भावः । यथा—माँस्पचन्यादौ (शु. य. स.—२५/३६) माँउस्" (पृ. १३३) इति ।

रङ्गो द्विमात्रिकः । स च मुखनासिकोभयेनोच्चार्यते, रङ्गाश्रयस्य स्वरस्य पूर्वांशस्तु मुखेनेत्यन्यदेतत् । तदाह याज्ञवल्क्यशिक्षा—

"नासादु ?) नस्त उत्पद्यते रङ्गः कांस्येन समनिःस्त्र (रः?)नः
मृदुश्चैव द्विमात्रश्च त्रृष्टिमार३॥ऽ इवेति निदर्शनम्"

(श्लो. १९४) इति ॥

रङ्गे यत्सार्धद्व्यङ्कप्रदानं भवति तद्रङ्गस्य द्वे मात्रे, विवृत्तेश्चार्धमात्रा चेत्येता मिलित्वा भवन्तीतिकल्पितम्। अन्यथा द्विसंख्यैव तत्र दातुमुचिता स्यात्। प्रातिशाख्यकीर्त्तिप्रकाशे तु "मृदुः सार्धद्विमात्रः स्यात्" इति पाठः धृतः (३/१४३स्थ)। शास्त्रवर्णितानां रङ्गमात्रांशानां स्वारस्येन विवृत्ते-रर्धमात्रया मिश्रितो रङ्गोऽत्राभिप्रेत इति कल्पयितुं शक्यम्। रङ्गस्य मात्रां-शानामुच्चारणस्थानानि शंसितानि पाणिनीयशिक्षायाम्। यथा—

"हृदये चैकमात्रस्तु अर्धमात्रस्तु मूर्द्धनि
नासिकायां तथार्द्धञ्च रङ्गस्यैवं द्विमात्रता"

(श्लो. २८) इति।

अत्र १+½+½=२ इति मात्राविभागः कृतः। लोमशीशिक्षायां तु १+¼+¾=२ इति मात्रा विभाजिता। यथा—

"तस्य मात्रा तु हृदये अणुमात्रा तु मूर्द्धनि
नासाग्रे त्वणूनां मात्रा रङ्गास्य परिकीर्त्तिता।"

(श्लो. ७) इति।

उभयथाऽपि रङ्गस्य द्विमात्रिकत्वमेवायाति। यत्तु "प्लुतादेकगुणो रङ्गः—" (श्लो ४५) इति मल्लशर्मकृतशिक्षायां रङ्गस्य चतुर्मात्रकत्वमुक्तम्, तद्रङ्गा-श्रयद्विमात्रिकदीर्घस्वरमात्रासङ्कलनेनेति बोध्यम्।

"—रङ्गादेकगुणाधिकः
महाशब्देन संयुक्तो व्यञ्जनं चार्धमात्रकम्
अतिरङ्गा महारङ्गाद् वृद्धो ह्येकगुणाधिकः" (श्लो. ४५,४६)—

इति तत्र प्रोक्तः पाञ्चमात्रिको महारङ्गः पूर्वोक्तचतुर्मात्रासु विवृत्तिमिश्रणेन भवति, षण्मात्रोऽतिरङ्गश्च महारङ्गादभिन्न इति ३/७४ श्लोकस्थशिक्षावल्ल्याष्टिप्पण्या ज्ञायते । तत्र ह्युक्तम्—"रङ्गा—(उपधानिका)पेक्षया महारङ्गे अतिरङ्गे च कालाधिक्योक्तिः सविवृत्तिरङ्गोपधासमुदायविषया । अत्र ये महारङ्गाः ते एव अतिरङ्गा अपीति बोधनाय लक्षितं "यस्याद्वयं प्रदृश्येत" इति अमोघानन्दिन्याम् (४५, ४६) । संज्ञाभेदस्तु परिगणनसौकर्यार्थः । परिमाणभेदश्चिन्त्यः । अतएव सर्वत्र रङ्गेषु समानश्रुतिमेव श्रावयन्ति वैदिकाः" इति ।

इदं व्याख्यानं नैव पूर्णं सन्तोषमावहति । रङ्गमहारङ्गातिरङ्गेति नामवैविध्ये हि केनापि महत्तरेणोद्देश्येन भाव्यम् । सूक्ष्मानुसन्धानापेक्षोऽयं विषयः ।

स्वरव्यञ्जनपरकत्वेन रङ्गस्य द्वैविध्यमुक्तं लोमशीशिक्षायाम् । यथा—

"रङ्गस्तु द्विविधो ज्ञेयः स्वरपरो व्यञ्जनः परः"

(श्लो. ६) इति ।

यथा—'महाँ॥ऽइन्द्रो वज्रहस्तः' इत्यादिस्थो रङ्गः स्वरपरकः । 'शत्रूँ॥रप' इत्यादिस्थश्च व्यञ्जनपरकः ।

रङ्गस्य द्विमात्रकत्वं सार्धद्विमात्रकत्वञ्च विवेचितम् । क्वचित्तस्य मात्रिकत्वमप्यनुशिष्टम् । अतएव—

"द्विमात्रो मात्रिको वापि नासामूलं समाश्रितः
अन्ते प्रयुज्यते रङ्गः पञ्चमैः सानुनासिकः"

(श्लो. १६४)

इति याज्ञवल्क्यशिक्षा । वस्तुतस्तु मात्रिको रङ्गो यजुर्वेदे नास्तीत्यग्रे वक्ष्यते । अत्रामरनाथदीक्षितशास्त्रिसम्पादितायां याज्ञवल्क्यशिक्षायां 'सानुनासिकः' इत्यस्य स्थाने 'सर्वनासिकः' इति पाठो धृतः । तदनुसारं च 'न तु अयं मुखनासिकावचनः करणीय इत्यर्थः' इति शिक्षावल्ल्यां व्याख्यातम् । ईदृशं व्याख्यानं नैव वस्तुस्थित्यवबोधकम् , अनुस्वारवर्जं कस्यापि वर्णस्य केवलनासिकयोच्चारणस्य प्रयोगेणासमर्थितत्वात् । शिक्षाप्रकाशोक्तद्वितीयानुस्वारस्तु न वस्तुतोऽनुस्वारः, स त्वर्धचन्द्र एव । तस्मात्तस्य न केवलनासिकयोच्चारणम् । तेनेदृशस्थलेषु याज्ञवल्क्यशिक्षोक्तो नासिक्यशब्द आनुनासिक्ये पर्यवस्यतीति नो दर्शनम् ।

अस्य मात्रिकत्वं वेदभेदनिबन्धनं विषयभेदनिबन्धनं चेति द्विधाऽनुशिष्टम् । वेदभेदनिबन्धनं यथोक्तं प्रातिशाख्यकीर्त्तिप्रकाशे—"एते द्विमात्रप्रायाः । एतच्छाखीयानां द्विमात्रा एव । बह्वृचानामेकमात्रा अपि पठ्यते" (३/१४३स्थ) इति । विषयभेदनिबन्धनं यथोदाहृतं शुक्लयजुःप्रातिशाख्ये । तत्र हि "महाँ२॥ऽ इन्द्रो वज्रहस्तः" इत्यादौ (३/१३२स्थ) स्वरपरकस्य द्विमात्रकत्वम्, "शत्रूँ१॥ रप" इत्यादौ (३/१४२स्थ) च व्यञ्जनपरकस्यैकमात्रत्वं प्रकाशितम् ।

नायं विभागः शिक्षावल्लीकाराय रोचते । यत्रार्द्धानुस्वारस्य न रङ्गत्वम् अपित्वनुनासिकत्वम्, स एव मात्रिकरङ्गस्य विषय इति तस्य मतम् । तथा च तस्योक्तिः—"अहीन् चेत्यादौ 'चच्छयोः शम्' इति नकारविकारे कृते 'अनुनासिका चोपधा' इति या उपधानिका 'अहीँश्च' इत्यादौ जाता तत्रापि रङ्गवदेवोच्चारणम् । (द्विमात्रो मात्रिको वापी'ति पद्ये मात्रिको वेति वचनस्यात्रैव तात्पर्यम् । 'जहि शत्रूँ१॥रपे) त्यादीनामेकमात्रत्वपरिगणनं तु न वास्तविकमित्यपि ध्येयम्" । (३/७६सूत्रस्थ) इति । अमोघानन्दिनीशिक्षायामेकमात्रत्वपरिवर्त्तेन सार्द्धैकमात्रत्वस्यानुशासनं तादृशपरिगणनस्यावास्तविकत्वे हेतुस्तत्र कल्पितः । तथा चोक्तम्—

"बृहदमोघानन्दिन्याम् (४१) एषां पञ्चानामनुरङ्गसंज्ञकानां सार्धमात्रिकत्वोक्तेः" इति । अतएव स्वरपरका वास्तवरङ्गा अमोघानन्दिनीशिक्षोक्ता स्वर्णपरका अनुरङ्गाश्च द्विमात्रिकरङ्गत्वेन तथा व्यञ्जनान्तरपरका अरङ्गा अपि रङ्गत्वेनोच्यमाना उपधानिका अनुनासिका वा एकमात्रिकरङ्गत्वेन विवेच्या इति तेन शिक्षावल्ल्यां प्रकाशितम् । (या. शि. ३/७१स्थ) ।

विविधग्रन्थेषु याजुर्वैदिकरङ्गस्य द्विमात्रकत्वानुशासनादनुरङ्गाणां च सार्धैकमात्रकत्वेन द्विमात्रिकरङ्गकल्पत्वादेतेषामेव रङ्गत्वस्वीकारस्तदन्येषां चास्वीकारो यदत्र विहितस्तत् साध्वेव । परन्तु 'अहाँ"श्च' इत्यादावुपधानिकापरपर्यायेष्वनुनासिकेषु 'रङ्गवदेवोच्चारणम्' इत्युक्तिर्वस्तुस्थितिं नैव सम्यङ् निर्दिशति । रङ्गशब्दस्य नासिकोच्चार्यसामान्यार्थे ग्रहणात्तत्रानुनासिकेऽपि रङ्गशब्दप्रयोग इति कल्पनाऽत्र साधीयसी प्रतिभाति । एवं प्रान्तनासिक्य-नासिकोच्चार्येत्यर्थद्वये तत्तत्स्थानेष्वौचित्यवशात्कल्पिते रङ्गविषयकविविधोक्तीनां परस्परविरोधः परिहृतो भवेत् । यथा—"द्विमात्रो मात्रिको वाऽपि" इत्युदाहृते श्लोके रङ्गशब्दस्य द्विमात्रेतिविशेषणस्वारस्येन प्रान्तनासिक्यलक्षणं वास्तविकरङ्गत्वम्, मात्रिकेतिविशेषणस्वारस्येन च सर्वानुनासिकापरपर्यायमनुनासिकत्वमिति । नासामूलं नासिका वाऽस्योच्चारणस्थानमिति प्रतिपादितपूर्वम् । किंचास्याभ्यन्तरप्रयत्नोऽस्पृष्टम्, बाह्यप्रयत्नाश्चानुनासिकोदात्तानुदात्तस्वरितसंवारनादघोषाश्च युक्त्या सुसाध्याः ।

इत्थमयोगवाहानां संख्या ३० । सा च १६२ इति स्वरसंख्यया, ४० इति व्यञ्जनसंख्यया च युक्ता वर्णान् २३२ संख्यकान् विदधाति ।

## (ऋ) स्वरभक्तिः

महानस्य विषयः । तैत्तिरीयप्रातिशाख्ये यः स्वरभक्तिप्रकारः शंसितस्ततोऽप्यधिकाः प्रकाराः शास्त्रान्तरेषु वर्णिताः । अतोऽत्र तद्विषये

यथाशक्ति पूर्णाङ्गविवेचनार्थं व्यवसीयते। तन्मध्ये प्रसङ्गागतस्तैत्तिरीय-प्रातिशाख्योक्तः स्वरभक्तिप्रकारः स्वत एव विवेचितो भविष्यति। क्वचिद्व्यञ्जनयोर्मध्ये स्वरस्य कश्चिदंशः प्रविशति। व्यञ्जनद्वयमुच्चारयितुं प्रवृत्त उच्चारयिताऽनिच्छन्नपि तद्व्यञ्जनमध्ये कस्यचित्स्वरस्य कमप्यंश-मुच्चारयत्येव। उच्चार्यमाणः स्वरः पूर्णरूपेण यद्युच्चारितः स्यात्तदाऽन्त-तस्तस्य निम्नतमैकमात्रा नूनं तिष्ठेत्। किन्त्वपूर्णरूपेणोच्चारणादस्य कालमात्रैकमात्रात ऊना भवति। अयं स्वरभागः स्वरभक्तिरुच्यते। भज्+घञ्=भागः, भज्+क्तिन्=भक्तिः भागभक्तिशब्दयोरीदृश-भाववाचकप्रत्ययाभ्यां निष्पन्नत्वात्तुल्यार्थता। अतः स्वरभक्तिर्नाम भग्नां-शस्वरः। ऋक्प्रातिशाख्येऽस्मिन्नेवार्थे स्वरभक्तिशब्दो व्यवहृतः।

कतिचिदाचार्याः स्वरभक्तेः सत्तां न स्वीकुर्वन्ति, स्वीकुर्वत्सु च मतभेदो दृश्यत इति ऋक्प्रातिशाख्यादवगम्यते। यथा—

"सर्वत्रैके स्वरभक्तेरभावं
रेफोपधामपरे विद्यमानाम्
अक्रान्तोष्मप्रत्ययाभावमेके
पूर्वोत्तरस्वरसरूपतां च" (६/१४) इति॥

तत्रैव कथितानि स्वरभक्तेस्त्रीणि क्षेत्राणि प्रदीयन्ते। यथा—

(क) यमः+वर्ग्यपञ्चमः (ऋ. प्रा. ६/१०) उदाहरणम्—पलिक् (क्+उँ)/नी।

(ख) घोषाभिनिधानम् (=अपूर्णोच्चार्यमाणघोषव्यञ्जनम्)+स्पर्श ऊष्म-वर्णो वा।

"विच्छेदात् स्पर्शोष्मपराच्च घोषिणः" (६/१३)

इत्युक्तिस्तत्र प्रमाणम्। उदाहरणम्—अर्वाग् (ए) देवाः। अत्र स्वरभक्तेः 'दे' इत्यत्रत्योत्तरस्वरेण सरूपता। अर्वाग् (आ) देवाः इति वा। अत्र तु स्वरभक्तेः 'वा' इत्यत्रत्यपूर्वस्वरेण सरूपता।

(ग) र्+व्यञ्जनम् । अत्र प्रमाणं खलु—

"रेफात् स्वरोपहिताद्व्यञ्जनोदया
ऋकारवर्णा स्वरभक्तिरुत्तरा" (६/१३) इति ।

उदाहरणम्—कर् (ऋ)/तव्यम् । अत्र ऋवर्णात्मिका स्वरभक्तिः । ल्+ऊष्मवर्णः— अस्यां स्थितावपि ऌरूपेण स्वरभक्तिर्भवति । यद्यप्यस्मिन् विषय ऋक्प्रातिशाख्ये कापि चर्चा न विहिता, तथापि शुक्लयजुःप्रातिशाख्येऽनुशिष्टमस्ति । यथा—"रलाद्दलृवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र" (४/१७) इति । उदाहरणम्—शतवल् (ऌ)/शः । वैशिष्ट्याभावादियं स्वरभक्तिस्तृतीयप्रकार एवान्तर्भवितुमर्हति ।

प्रथमस्वरभक्तेः स्वरूपविषये तस्याः सर्वमान्यताया अभावविषये च यमवर्णनिरूपणकाले शंसितम् । द्वितीयस्वरभक्तेर्विचार ऋक्प्रातिशाख्याथर्वप्रातिशाख्ययोर्दृश्यते । किन्तु तत्रास्या उच्चारणविषये विशिष्य सूचना नैव दत्ता—कुत्र पूर्वस्वरसरूपता कुत्र वा परस्वरसरूपतेति । अत आधुनिकमुच्चारणमभिलक्ष्य केवलं तत्कालोच्चारणमनुमीयत एव । अद्यत्वे खलु 'अर्वाग् देवाः' इत्यस्य पठनवेलायां केचित् परवर्ति 'दे' इत्यक्षरस्थस्वरसरूपाम् (ए) स्वरभक्तिं योजयन्तः अर्वाग् (ए) देवाः इति पठन्ति, केचिद्वा पूर्ववर्ति 'वा' इत्यक्षरस्थस्वरसरूपाम् (आ) स्वरभक्तिं योजयन्तः अर्वाग् (आ) देवाः इत्युच्चारयन्ति । अतएव विनिगमनाविरहादुभयमप्युच्चारणं ग्रहणीयम् । न केवलं द्वितीयस्याम्, अपि तु तृतीयस्यामपि स्वरभक्तौ पूर्वोत्तरस्वरसारूप्यं केषांचिदिष्टमित्यग्रे दर्शयिष्यते ।

तृतीया स्वरभक्तिर्विविधप्रातिशाख्यशिक्षासु विवेचिता । अस्याः स्वरूपम् (ऋ) इति ऋक्प्रातिशाख्ये लिखितम् । अत एवैतन्मतेन शौर्य्यशब्दस्य स्वरभक्तिसंवलितं रूपं शौर् (ऋ)/य्यमिति ।

प्रथमद्वितीयस्वरभक्ती अस्वीकृत्य केवलं तृतीयां स्वरभक्तिं स्वीकुर्वन्त आचार्याः स्वरभक्तेरर्थं व्यञ्जनं कुर्वन्ति। तन्मतेनास्य शब्दस्य व्युत्पत्तिस्तावत्—करणसाम्यदृष्ट्या स्वरो यस्य व्यञ्जनस्य भक्तिर्भागोऽवयवो वा भूत्वोच्चार्यते तद्व्यञ्जनं स्वरभक्तिरिति। शौर् (ऋ)/य्य शब्दे ऋ वर्णस्य करणं जिह्वाग्रम्,तदेव च रेफस्येति समानकरणकत्वात्तदङ्गभावेन ऋकार उच्चार्यते। अयं च ऋस्वरो रेफस्य भक्त्यपरपर्यायोऽवयवो भवतीति रेफ एवात्र स्वरभक्तिरिति। तथा चोक्तं छन्दोभाषाव्याख्यायाम्—"योऽस्य (=रेफस्य) समानकरणः स्वरः तद्भक्तिर्भवितुमर्हति। ऋकारश्चास्य जिह्वाग्रकरणत्वेन सधर्मा। भक्तिरवयव ए(का?) कदेश इत्यनर्थान्तरम्। एतदुक्तं भवति ऋकारावयवो भवतीति यावत्" (१/१५सूत्रस्थ) इति। उव्वटभाष्येऽपि "ऋलृस्वरसदृशौ व्यञ्जनावर्धमात्राविति ब्रूमः" (शु. य. प्रा. ४/१७ सूत्रस्थ) इति ऋलृस्वरभक्त्योर्व्यञ्जनस्वरूपमेव प्रकाशितम्।

एकस्यैव ऋवर्णस्य भागद्वये कृते द्वौ स्वरभागौ स्वरभक्तिरिति प्रसिद्धौ निःसरत इति प्रतिपादनावसरे ऋवर्णस्य कया सूक्ष्ममात्रया विशिष्टः कतमोऽंशः स्वरभक्तिर्भवतीति निरूपयिष्यन्ती तैत्तिरीयप्रातिशाख्यस्य त्रिभाष्यरत्नव्याख्या त्रिभिरंशैरृकारं घटितं वक्ति। प्रथमस्तावत् स्वरस्याण्वंशः, एकचतुर्थांश इति यावत्। स च पादमात्रकः। तदनन्तरं द्वितीयांशो व्यञ्जनं रवर्णः। स चार्धमात्रकः। तृतीयांशश्च पुनः स्वरस्य पादमात्रकोऽण्वंशः, इत्थं घटित ऋवर्ण आहत्यैकमात्रको भवति। एवंविधस्य ऋस्वरस्य समानभागेन विभक्तौ कृतायां द्विविधा स्वरभक्तिर्निर्गलति। प्रत्येकं स्वरभक्तिरर्धमात्रिका भवति। तत्र प्रथमस्वरभक्तौ प्रथमं स्वरांशः पादमात्रकः, तदनन्तरमर्धमात्रकरवर्णस्य प्रथमार्धांशः पादमात्रकस्तिष्ठति। एवमर्धमात्रा। द्वितीयस्वरभक्तेरारम्भे प्रथमं रवर्णस्य शिष्टो द्वितीयार्धांशः पादमात्रकः, तदनन्तरं स्वरांशश्च पादमात्रक इत्य-

त्राप्यर्धमात्रा। तथा च तत्रोक्तम्—"स्वरभक्तिस्वरूपं तु विस्पष्टं व्याचष्टे वररुचिः—ऋकारादिरणुमात्रा, रेफोऽर्धमात्रा, मध्ये शेषा स्वरभक्तिरिति। अस्यार्थः—इन्द्रियाविषयो योऽसावणुरित्युच्यते बुधैः। चतुर्भिरणुभिर्मात्रापरिमाणमिति स्मृतम्। मात्रिकस्य ऋकारस्यादिरणुमात्रा स्वरभागः, अत्र रे(फो?) फेऽर्धमात्रे भज्यमाने सति तौ भागौ पूर्वोत्तराणुसहितौ प्रत्येकं स्वरभक्तिनामधेयं भजेते" (१/१५सूत्रस्थ) इति।

रवर्णोत्तरं यस्मिन् कस्मिन्नपि व्यञ्जने स्थिते तृतीया स्वरभक्तिर्भवतीति पूर्वमुक्तम्। तत्र केचित् शषसहेष्वेव परेष्वियं स्वरभक्तिर्भवति, नान्यव्यञ्जनेष्विति विप्रतिपद्यन्ते। यथा—"रेफोष्मसंयोगे रेफस्वरभक्तिः" (२१/१५) इति तैत्तिरीयप्रातिशाख्यम्। अयमेव स्वतन्त्रवर्णत्वेन त्रिभाष्यरत्ने विवेचितः। एतज्ज्ञातमासीच्छौनकेन। तेनासौ वक्ति—

"अकान्तोष्मप्रत्ययाभावमेके" (ऋ. प्रा. ६/१४) इति।

मतमिदं नारदीशिक्षायां गृहीतम्। तदनुसारं स्वरभक्तिर्द्विविधा। प्रथमा स्वरभक्तिः स्वरांशेनारभ्यत इति स्वरोदयेति कथ्यते। स्वरेण चारम्भादस्य स्वरूपम्— (ऋ) इति। व्यञ्जनेनारभ्यमाणा स्वरभक्तिस्तु व्यञ्जनोदयेति कथ्यते। व्यञ्जनेन चारम्भादस्य स्वरूपम् (ऌ) इति भवति। शषसव्यञ्जनेषु परेषु स्वरोदया स्वरभक्तिर्भवति, सा च विवृता भवति। हकारे परे च व्यञ्जनोदया भवति, सा च संवृता भवतीति विषयविभागोऽप्याचार्यैः कृतः। अत्र प्रमाणं तु नारदीशिक्षा। यथा—

"स्वरभक्तिर्द्विविधा त्वृकारो रेफ एव च
स्वरोदा व्यञ्जनोदा च विहिताऽक्षरचिन्तकैः
शषसेषु स्वरोदायां (दयां) हकारे व्यञ्जनोदयाम्।
शषसेषु विवृतां तु हकारे संवृतां विदुः"

(२/६/८,९) इति।

अनयोः स्वरभक्त्योरुदाहरणे यथा—वर् (ऋ) षम्, वर् (र) हः इति।

स्वरभक्तेः स्वरांशस्य सूक्ष्मतया सर्वैस्तस्य समानमुच्चारणं नैव संभवति। एकतो यदा लोमशीशिक्षाऽनुशास्ति यत्—

"रेफस्य च ऋवर्णस्य स्वरभक्तेस्तथैव च
अवर्णवत् प्रयोगः स्यात्—" (६/४) इति

तदा माण्डूकीशिक्षा शतवल् (इ) शः इत्यत्र इकारवदुच्चारणं कथयति। यथा—

"सम्यगेनां यदा पश्येच्छतवलिशेति निदर्शनम्"
(श्लो. १०१) इति।

केशवीशिक्षायां त्वेकारवदुच्चारणमनुशिष्टम्। यथा—

"अहल्श्ल्यूर्ध्वरेफस्य सैकारः प्राक् च" (सूत्र ४) इति।

रवर्णात्परं शषसह-ऋ इति वर्णेषु स्थितेषु यथा (ए) इत्यस्योच्चारणं भवति, तथा क्वचिल्लवर्णात् परमपीति प्रतिज्ञापरिशिष्टसूत्रे प्रतिपादितम्। यथा— "अथापरान्तस्थस्यायुक्तान्यहलः संयुक्तस्योष्मऋकारैरेकारसहितोच्चारणम्, एवं तृतीयान्तस्थस्य क्वचित्" (२/३,४) इति।

केचिदाचार्याः स्वरभक्तिं कुत्रचित् तत्पूर्वाक्षरस्थस्वरसदृशीं कुत्रचिच्च पराक्षरस्थस्वरसदृशीं मन्यन्ते। यथा—धूर् (उ)/षदम्, वर् (इ) हिषदम्। अत्र प्रथमोदाहरणे पूर्वस्वरेण सादृश्यं द्वितीये तु परस्वरेण।

ऋक्प्रातिशाख्योक्त—त्रिविधस्वरभक्तिष्वाद्ये ह्रस्वे, अन्तिमा च परव्यञ्जन ऊष्मवर्णे दीर्घा, साचार्धमात्रा; तदभावे च ह्रस्वा पादमात्रिकेति तत्रोक्तम्। यथा—

"द्राघीयसी तूष्मपरेतरा क्रमे" (६/१३) इति ।
"द्राघीयसी साऽर्धमात्रेतरे च
अर्धोनाऽन्या……" (१/१७) इति च ।

अथर्वप्रातिशाख्ये त्वयं मात्राविभागो गृहीतः। केवलमर्धमात्रा-स्थाने पादमात्रा, पादमात्रास्थाने च पादार्धमात्रा वैकल्पिकभावेन तत्र गृहीता । यथा—"रेफादूष्मणि स्वरपरे स्वरभक्तिरकारस्यार्धं चतुर्थ-मित्येके, अन्यस्मिन् व्यञ्जने चतुर्थमष्टमं वा" (१/१०१, १०२) इति । एत-द्वैकल्पिकमतानुसारं दीर्घस्वरभक्तेर्मात्रा ¼, ह्रस्वस्वरभक्तेश्च मात्रा १/८ इति ।

तस्मिन्नेव ग्रन्थे ह्रस्वस्वरभक्तेर्नाम स्फोटन इति लिखितम् । यथा—"वर्गविपर्यये स्फोटनः पूर्वेण चेद् विरामः" (२/३८) इति । एत-दनुसारं कस्यचिद् वर्गस्य व्यञ्जनात्परं तत्पूर्ववर्तिवर्गस्य व्यञ्जने विद्यमाने इयं स्फोटनाख्या स्वरभक्तिर्भवति । उदाहरणम्—उत्(अ १/८)कलः, त्रिष्टुब्(अ १/८)जगत्यौ । अत्र प्रथमोदाहरणे दन्त्यवर्ग्यतकारात्परं तत्पूर्वकण्ठ्यवर्गस्य ककारोऽस्ति । द्वितीये चौष्ठ्यबकारात्परं तत्पूर्व-तालव्यवर्गस्य जकारोऽस्ति । अतस्तत्र पादार्धमात्रा स्वरभक्तिः । यथा पूर्ववर्णोच्चारणस्य विच्छेदानन्तरं परवर्णोच्चारणं भवति, तन्मध्ये यमाश्चा-पतन्तीति तेषां विच्छेद इति नाम कृतमित्यभ्यूहितम्, तथैवात्रैकस्य व्यञ्जनस्योच्चारणानन्तरमन्यस्य व्यञ्जनस्य चोच्चारणात् पूर्वं मध्ये य उच्चारणप्रवाहो व्याहतो भवति, तत्र स्वरभक्तिरन्तः प्रविशति । स च प्रथमव्यञ्जनस्य स्फोटनानन्तरमेव भवतीति स्फोटनशब्देनाख्यातमथर्व-प्रातिशाख्ये । "स्फोटनं नाम पिण्डीभूतस्य पृथगुच्चारणम्" इत्युव्वटभाष्य-मपि (शु. य. प्रा. ४/१६३सूत्रस्थ) इममेवार्थमाह । यदा तु पिण्डीभूतो व्यञ्जनसंयोगो नीरन्ध्रीभवन्नेकेनैवोच्चारणप्रवाहेणोच्चार्यते, तदा तु संयोग-पिण्डो भवति, स्वरभक्तिस्तत्र प्रवेष्टुमन्तरं नैव लभते । ईदृशपिण्डस्यो-

दाहरणं 'मल्ली' इति। अत्र लकारयोरेकोच्चारणप्रवाहेणैवोच्चारणात् स्वर-भक्तेरप्रवेशः । अत्र संपिण्डितव्यञ्जनयोरयस्पिण्डतुल्यतेत्युव्वटभाष्यम् । यथा—"यथाऽयस्पिण्डादीनामाश्लेषस्तथैतेषां व्यञ्जनानामिति श्लोकार्थः" (शु. य. प्रा. ४/१६३सूत्रस्थ) इति । प्रथमस्पर्शवर्णोच्चारणे रुद्धस्य वायु-प्रवाहस्य द्वितीयस्पर्शवर्णोच्चारणस्य मध्यभागे निःसारणफलेनेयं स्वरभक्ति-र्भवतीति Phonetics in Ancient India ग्रन्थे वदन् W. S. Allen महोदय इमं Pike महोदयेन वर्णितं Crossing glide इति मन्यते[5] । स्वरभक्तिः स्वरसदृश्येव, न तु स्वरः । अस्याः सर्वोच्चसीमाऽर्ध-मात्राया अनधिका । तदानीन्तना उच्चारणविद् इ-उ-स्वरभक्तिमेकमात्रक-स्वररूपेणोच्चार्यमाणां वीक्ष्य तत्रोच्चारणदोषममन्यन्त । यथा नारदी-शिक्षा—

"स्वरभक्तिं प्रयुञ्जानस्त्रीन् दोषान् परिवर्जयेत्
इकारं चाप्युकारं च ग्रस्तदोषं तथैव च" (२/६/६) इति ।

---

5. "The Mechanism of the feature referred to is perhaps the release of the front closure during the formation but before the completion of the back closure resulting in the momentary outflow of an air-stream attenuated by the back constriction ; it might then be identified with what pike terms a "Crossing guide.—"

"When the releasing glide of one stricture is simultaneous with the approaching glide of another, a crossing glide is developed. One such audible crossing glide is the sound of open transition between two voiceless or voiced stops ; in (apta) a type of crossing glide aspiration may be heard if the lips begin to open while the tongue is moving towards the alveolar arch" (Part III, Section 3. 121, p. 74).

ह्रस्वस्वरभक्तेः कालमात्राया निम्नतमत्वाद् व्यञ्जनद्वयमध्ये तस्याः प्रवेशेऽपि तत्स्थितेरवहेलनात् सा संयोगविघातिका न भवतीति सुजूर्णिणः (=सुजूर् (ऋ १/८)/णिणः) इत्यत्र रेफादव्यवहितपरवर्त्तित्वेन मन्यमानस्य णस्य 'अचो रहाभ्यां द्वे" (८/४/४६) इति पाणिनिसूत्रेण द्वित्वं भवत्येव । अत एव "न सयोग स्वरभक्तिर्विहन्ति" (६/१०) इति ऋक्प्रातिशाख्यस्य दर्शनम् । परन्तु दीर्घस्वरभक्तेः कालमात्राया अधिकतरत्वात्तस्याः संयोगविघातकताविषये मतद्वैधं वर्त्तते । तेन 'धूर्वस्वरं संयोगाविघातश्च" (१/१०४) इत्यथर्वप्रातिशाख्ये संयोगाविघाते प्रतिपादितेऽपि तदनुसारं 'वर् (ऽ) षः' इत्यादौ षस्य द्वित्वे च स्वतः सिद्धेऽपि एतद्वैपरीत्येनामरीशिक्षामतेन संयोगविघातकत्वम्, तेन च द्वित्वाभावः प्रकाशितः । तदुक्तं प्रातिशाख्यप्रदीप शिक्षायाम्—"अमरीशिक्षाऽप्येतदर्थे—

ऊष्मणां स्वरभक्तिस्तु द्विर्भावं बाधते यथा
व्वर्षो व्वर्षीयसि ह्वार्षीच्छतवल्शोऽपि सिद्धयति"

(पृ. २६५) इति ।

श्रीमद्भागवते दीर्घस्वरभक्तिरेकमात्राविशिष्टह्रस्वस्वररूपेण गृहीतेति र्ष-र्हादौ स्वरभक्तिमिश्रितं रेफं स्वतन्त्राक्षररूपेण परिगृह्य श्लोकपादानामावश्यकाक्षरसंख्या पूरिता । यथा—

"ध्यानेन नो दर्शितं तदुपासकानाम् (३/६/४/२)
शीतोष्णवातवर्षैरितरेतराच्च (३/६/८/२)
धर्मोऽर्पितः कर्हिचिद्ध्रियते न यत्र (३/६/१८/४)" इत्यत्र ।

एषु श्लोकपादेषु र्शि, र्षै, र्हि इत्येषां स्थाने यथाक्रमं रशि, रषै, रहि इत्याकारकपाठाभावे पादान्तरवच्चतुर्दशाक्षरविशिष्टत्वाभावस्तेन वसन्ततिलकवृत्तभङ्गप्रसङ्गः ।

आधुनिकभाषास्वपि स्वरभक्तिरुच्चार्यते । यथा—ओडियाभाषायां वाग्देवताशब्दस्य स्वरभक्तिमिश्रमुच्चारणं वाग् (ए) देवता इति । इङ्ग्लिश् भाषायां च Curl शब्दोच्चारणे स्थानविशेषेषु r,l इत्येतयोर्मध्ये सूक्ष्मोदासीनस्वरस्य (ə) इत्येतस्योच्चारणं भवतीति R. S. Heffner महोदयस्य General Phonetics ग्रन्थाज्ज्ञायते[6] ।

स्वरभक्तेः स्वतन्त्रवर्णत्वाभावाच्छिक्षाग्रन्थेष्वस्या विषये पूर्णाङ्गविवेचनं नास्ति । केवलं तैत्तिरीयप्रातिशाख्यकारस्तृतीयां स्वरभक्तिम् 'ऋ' इति मन्यमानोऽस्योच्चारणस्थानं वर्त्स्वं करणं चाग्रजिह्वां शंसति । यथा—"एकेषामनुस्वारस्वरभक्त्योश्च" (२/१९) इति । प्रदर्शितवर्णनिरूपणविषयकयुक्तेरनुसारं विवेचने तु प्रथमस्वरभक्तेः स्थानं नासिका मुखनासिका वा, करणं नासिकामूलम्, आभ्यन्तरप्रयत्नोऽस्पृष्टमर्धस्पृष्टं वा, बाह्यप्रयत्नाश्च संवारनादघोषा भवेयुः । द्वितीयस्वरभक्तिस्तु येन स्वरेण तुल्या श्रूयेत, तत्स्वरस्य समानस्थानकरणप्रयत्ना भवेत् ।

कालक्रमेण विकसिता स्वरभक्तिः क्वचित् पूर्णस्वररूपेणालिख्यतोदचार्यत च । यथा—पृथु+ई (ङीप्)>पृथ्वी=पृथ् (इ)वी । अत्र स्वरभक्तेर्विकासेन पूर्णस्वरत्वाधिगमे पृथिवीति भवति । संस्कृतशब्दानां श्री-ह्री-क्लान्त-स्नेहादीनां स्वरभक्तेर्विकासे प्राकृते यथाक्रमं सिरी-हिरी-किलन्त-सिणेह इत्यादयो भवन्ति । संस्कृत-सर्षपशब्दश्च तथैव ओडियाभाषायां 'सोरिष' इति भवति ।

प्रदत्तोदाहरणेषु यथा स्वरभक्तेर्विकासात्स्वरो भवति, तथा क्वचिद्विपरीतप्रवृत्त्या स्वरस्य ह्रासात्स्वरभक्तिर्भवति, क्वचिच्च पुनर्ह्रासा-

---

6. "The sonority of 'r' may diminish till it is less than that of 'l' in which event a disyllabic form [karəl) may result." (Section 307, chap. 4, p. 75).

लोपो भवति। यथा—संस्कृतस्य वरणीयशब्दो वरेण्य इति जातः। वृञ एण्यप्रत्ययविधानं तु परवर्त्तिवरेण्यशब्दस्य संस्कृते ग्रहणाय व्यवस्थापन-मात्रमेव। सुवर्ग>स्वर्ग, सुवर्ण>स्वर्ण, इत्यादयः शब्दाः संस्कृते विपरीतप्रवृत्तेरुदाहरणानि। संस्कृतशब्दस्य नरकस्य ओडियाभाषायां 'नर्क' इति कथनं तद्वदेव।

विसर्गादारभ्य स्वरभक्तिपर्यन्तं ये खल्वयोगवाहा वर्णिताः, न ते सर्वसम्मताः। तथाहि—जिह्वामूलीयोपध्मानीयनासिक्याः शुक्लयजुर्वेदस्य काण्वशाखायां वर्तमाना अपि माध्यन्दिनशाखायां न सन्तीति शुक्लयजुःप्रातिशाख्यं प्राक् प्रदर्शितम्। "अन्येषां तु मतम्—अनुस्वारस्यानुनासिकमात्रत्वम्" इति त्रिभाष्यरत्नाज् (तै. प्रा. २/१६स्थ) ज्ञायते यत् केचिदनुनासिकमेवानुस्वारस्थान उच्चारयन्ति। 'संयोग' इत्यादिस्थाने 'सँय्योग' इति यल्लिख्यते यजुर्वेदे, तदनेनोपपद्यते। अनुस्वारस्योच्चारणेऽन्ये च मतभेदा अनुस्वारप्रसङ्गे दर्शितपूर्वाः। यमानामुच्चारणाभावः, उच्चारणेऽपि यमसंख्यायां विसंवादश्च प्राक् प्रदर्शितः। ईषत्स्पृष्टौ ऋऌ-इत्येतौ पाणिनिना नोक्तौ। तौ च शब्द-कौस्तुभेऽयोगवाहमध्ये गणितावपि बहुषु ग्रन्थेषु तन्मध्ये न गणितौ। रङ्गविषये चर्चाऽयोगवाहप्रसङ्गे बहुत्र न विहिता। केचिच्च तमनुनासिका भिन्नं मन्यते। आनुनासिक्यं वर्णधर्म इति जानन्तः केचिन्न तद् वर्णकोटौ निक्षिपन्ति। स्वरभक्तेः कैश्चिदस्वीकारः, कैश्चित् स्थलविशेषेषु स्वीकारः, तस्याः स्वरूप-मात्रा विषये मतविसंवादाश्च दर्शिताः।

इत्थमयोगवाहानामाकृतिप्रकृतिसंख्याविषये न कोऽपि सर्वसम्मतः सिद्धान्तः समुल्लसति। न केवलमिदम्, अपि तु ऋक्प्रातिशाख्ये याज्ञवल्क्य-शिक्षायां चैभ्यः केषांचिद्वर्णानामुल्लेखेऽप्ययोगवाहेति वर्गीकरणं नैव कृतम्।

तृतीयचतुर्थपरिच्छेदवदत्रापि निरूपितानां वर्णानां मूलं भवति वायोर्विविधगुणकर्मैस्तवधयम्। एषु परिच्छेदेषु प्रदर्श्यमानानां मतभेदानां

कारणं तावत् (१) शास्त्रीयास्पष्टताऽशक्यार्थतादिदोषः (२) तत्तद्देशकाल-शाखानुसारं चोच्चारयितॄणां विविधानुभूतिश्च । ईदृशो मतभेदः सर्वदैव वर्तते । पाणिनेः पूर्वजस्य शौनकस्यापि समय इमा विप्रतिपत्तीः परिलक्ष्यापूर्णं वर्णोच्चारणशास्त्रमिति समालोचना प्रावर्त्तत यदर्थं शौनकः शिष्यान् शिक्षाशास्त्राध्ययने प्रोत्साहयितुकामः स्वकीयऋक्प्रातिशाख्य इत्थं कथयामास—

शास्त्रापवादान् प्रतिपत्तिभेदा-न्निन्दन्त्यकृत्स्नेति च वर्णशिक्षाम्
नैतेन शास्त्रेण विशिष्यतेऽन्यैः कृत्स्नं च वेदाङ्गमनिन्द्यमार्षम्"
(१४/३०) इति ॥

## (घ) वर्णाभासाः

केषांचिद् वर्णानां पूर्वं परस्ताद्वाऽन्यस्य कस्यचिद्वर्णस्याभासोऽप्यनुभूयते । न स वर्णो भवितुमर्हति, परन्तु वर्णस्यच्छाया । एतदर्थं वर्णाभास इति नामकरणमुचितं नः प्रतिभाति । स्वरभक्तिर्बहुमतानुसारमेतज्जातीयं वस्तु । माहेश्वरसूत्रगतवर्णमालायां भूतलिप्यां मातृकावर्णमालायां वाऽस्याः स्थानं नास्ति । अयोगवाहेष्वपि नास्याः प्रवेशः केनचित् प्राचीनमनीषिणा कृतः । स्थानकरणप्रयत्नदृष्ट्यापि नेयं पूर्णाङ्गतया विवेचिता । तस्मादियं प्रायः सर्वसम्मतो वर्णाभास इत्याकलयामः ।

कस्यांचिद्वैदिकशाखायामगृह्यमाणाः शाखान्तरवर्णा अपि वर्णाभासाः स्युः । पाणिनीयशिक्षायाः पञ्जिकाटीकायाम् "अयोगवाहा इत्यनुस्वारादयश्चत्वार उच्यन्ते । अनुस्वारो विसर्गश्च ≍क≍पौ च कण्ठ्यौ" (१६ श्लोकस्थ) इति त एवायोगवाहाः कथिता इति पाणिनिना च मुख्यवर्णैः सार्धमेतद्वर्णचतुष्टयविषय एव विचारः कृत इत्येतयोर्मतेन यमनासिक्या अपि वर्णाभासाःस्युः तद्वत् । काण्वशाखीयौ ळळ्हौ माध्यन्दिनशाखायां वर्णाभासौ भवेताम् ।

# १६ । विविधा वर्णमाला

एभ्यः २३० संख्येभ्यो वर्णेभ्यः कांश्चिन् कांश्चित् परिगृह्य वैदिकलौकिकसंस्कृतयोर्विविधा वर्णमाला प्रवर्तिता । कस्यामपि वर्णमालायामुदात्तानुदात्तस्वरितकृतानामनुनासिकाननुनासिककृतानां वा भेदानां गणना न कृता,तदितरवर्ण गणनायां विविधा विकल्पा विहिताः । यथा—

१ । "अष्टषष्टिं पठन्त्येके चतुष्षष्टिमथापरे" इति Critical Studies in the Phonetic Observations धृतं (p. 13) वैदिकाभरणव्याख्याया उद्धरणम् । अत्र वर्णसंख्याविषये वर्तते विकल्पः ।

२ । "त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ।
द्विचत्वारिंशद् व्यञ्जनान्येतावान् वर्णसंग्रहः" (८/२२)

इति शुक्लयजुःप्रातिशाख्यं वर्णान् ६५ संख्याकानाह । ते यथा—
अ आ आ ३ इ ई ई ३ उ ऊ ऊ ३ ऋ ॠ ॠ३ लृ ॡ ॡ ३ ए ए ३ ऐ ऐ३ ओ ओ ३ औ औ ३ क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह कुँ खुँ गुँ घुँ जिह्वामूलीयः, उपध्मानीयः, अनुस्वारः, विसर्गः, हुँ इति ।

एतन्मतेह्रस्व सन्ध्यक्षराः, ळ-ळ्ह इति सध्वनी, क्षः, चुँ इत्यत आरभ्य भुँपर्यन्ता यमाः, ऋ-लृ इतीपत्स्पृष्टौ, रङ्गः, स्वरभक्तिश्चेत्यते न गृहीताः ।

३ । (क) श्रीमद्भागवतस्य श्रीधरीटाकायां (११/२१/१७स्थ वर्णसंख्या त्रिषष्टिरुक्ता । यथा—

या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं
वर्णानन्तः प्रकटकरणैः प्राणसङ्गात् प्रसूते ।
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥—इति

"त्रिषष्टिश्चतुष्षष्टिर्वा वर्णाः संभवतो मताः" (श्लो. ३)

इति वर्णसंख्यां ६३ इति ६४ इति वा ऽभिदधती पाणिनीय शिक्षा वक्ष्यमाणप्रकारेण स्वरानजीगणत्। यथा—

"स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः।
अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रयौ।
दुःस्पृष्टश्चेति विज्ञेय लृकारःप्लुत एव च" (श्लो. ४,५) इति।

अत्र दुःस्पृष्टशब्द लृकारस्य विशेषणमीषत्स्पृष्टार्थकश्च परिकल्पितः शिक्षाप्रकाशे। यथा—"ईषत्स्पृष्टोऽन्तस्थसधर्मा लृकारः प्लुतः" (पृ. ३८६) इति। तत्र च। नुस्वारद्वयग्रहणं चतुःषष्टिसंख्यामास्कन्दति" इत्युक्तम् एतदनुसारं वर्णा यथा—अ आ आ ३ इ ई ई ३ उ ऊ ऊ ३ ऋ ॠ ॠ ३ लृ ए ए ३ ऐ ऐ ३ ओ ओ ३ औ औ ३ क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह कुं खुं गुं घुं अनुस्वारः, विसर्गः, जिह्वामूलीयः, उपध्मानीयः, लृ ३ इत्थं ६३। अनुस्वारस्य द्विविधतायां तु ६४ संख्याऽऽयाति।

शब्दकौस्तुभे तु "दुस्पृष्टश्च वह्वृचानां प्रसिद्ध ईळे बोळ्हेति। इत्थं। त्रिषष्टि लृ ३ इत्यस्य योगेतु चतुःषष्टिः" (पृ. ११४) इत्युक्तत्वादेतन्मते वर्णसंख्या अ आ आ ३ इ ई ई ३ उ ऊ ऊ ३ ऋ ॠ ॠ ३ लृ ए ए३ ऐ ऐ ३ ओ ओ ३ औ औ ३ क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह कुं खुं गुं घुं अनुस्वारः, विसर्गः, जिह्वामूलीयः, उपध्मानीयः, ळ ळ्ह इति। अत्र ळ-ळ्हौ दुःस्पृष्टावेकवर्णत्वेन गणितौ। इत्थं त्रिषष्टिः। प्लुतलृकार योगे तु चतुःषष्टिरिति।

एतन्मतद्वयं शुक्लयजुःप्रातिशाख्यमतेन सह प्रायः समानम्। विशेषस्तु लृकारस्य ह्रस्वदीर्घप्लुतरूपेण त्रैविध्यमत्र न स्वीकृतम्। प्रथममतेऽनुस्वारद्वयं गृहीतम्। द्वितीयमते तु ळ-ळ्ह इत्येतौ गणितौ।

४। त्रिभाष्यरत्ने वर्णानां संख्या ६० इति गणना कृता। यथा—"अ आ आ ३ इ ई ई ३ उ ऊ ऊ ३ ऋ ॠ २ लृ ए ऐ ओ औ इति स्वराः षोडश। क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म इतिस्पर्शाः पञ्चविंशतिः। य र ल व इति चत्वारोऽन्तस्थाः। ≍क≍प श ष स ह इति षडूष्माणः। अनुस्वारश्चेति सूत्रेण अनुस्वार उक्तः।......अथ विसर्जनीय इत्यनेन विसर्जनीय उक्तः। नासिका-विवरणादानुनासिक्यमिति रङ्ग उक्तः। पृक्तः स्वरात्परो ळो डमिति ळकार उक्तः। स्पर्शादनुत्तमादिति चत्वारो यमा उक्ताः। रेफोष्मसंयोगे रेफस्वर-भक्तिरिति स्वरभक्तिरुक्ता। अनेन प्रकारेण याजुर्वैदिकवर्णानां षष्टिसंख्या सूत्रत एव विस्पष्टं द्रष्टव्या" (१/१सूत्रस्थ) इति।

यजुर्वेदव्यवहृतवर्णा एवात्र गृहीता इति ऋ इत्यस्य सन्ध्यक्षराणां च प्लुतरूपम्, लृ इत्यस्यदीर्घप्लुतौ ळळ्ह इति, चुंइत्यत आरभ्य भुंपर्यन्ता यमा नात्र विद्यन्ते। आनुनासिक्यापरपर्यायो रङ्गः स्वरभक्तिश्च पृथग् वर्णत्वेन स्वीकृतौ।

५। ऋक्तन्त्रोक्ता वर्णसंख्या (१/१/२) खलु ५७। यथा—अ आ इ ई उ ऊ ऋ ॠ लृ ॡ ए ऐ ओ औ क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व ह श ष स विसर्गः, जिह्वामूलीयः उपध्मानीयः, (अनुनासिकः?) नासिक्यः, कुं खुं गुं घुं इति यमाः, दीर्घानुस्वारः ह्रस्वानुस्वारश्चेति।

६। "स्वराख्याः षोडश प्रोक्ताः स्पर्शाख्याः पञ्चविंशतिः।
व्यापकाश्च दशैते स्युः सोमेनाग्न्यात्मकाः क्रमात्" (३/२)

इति वर्णसंख्या ५१ इति कथितं प्रपञ्चसारतन्त्रे। एते खलु ते वर्णाः— अ आ इ ई उ ऊ ऋ ॠ लृ ॡ ए ऐ ओ औ, अनुस्वारः, विसर्गः, क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह ळ क्ष-इति। अस्यां वर्णमालायामपि प्लुता न गणिताः, जिह्वामूलीयोपध्मानीयौ त्यक्तौ, ळ-ळ्ह इत्येतयोर्ळ इति गृहीतः, क्ष इति च संख्यात इति विशेषाः।

७। अस्या एव वर्णमालाया विसर्गे वियुक्ते ५० वर्णा अवशिष्यन्ते, ये मातृकानाम्ना प्रसिद्धाः। एत एव भारतीदेव्या विविधा अवयवा भवन्तीत्युक्तं प्रपञ्चसारतन्त्रे। यथा—

"पञ्चाशद्वर्णभेदै रचितवदनदोःपादयुक्कुक्षिवक्षो-
देहां भास्वत्कपर्दां कलित शशिकलामिन्दुकुन्दावदाताम्।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्था-
मच्छाकल्पामतुङ्गस्तन जघनभरां भारतीं तां नमामि"
(७/१३) इति।

अस्यां वर्णमालायां विसर्गपरित्यागकारणं तु विसर्गस्य मायाशक्तिरूपत्वाच्छिवात्मकतदितरवर्णसमूहे तस्य विन्यासोऽनुचित इति चिन्तितं तान्त्रिकैः। तथा च सारदातिलकस्य पदार्थादर्शव्याख्यायामुद्धृतः श्लोकः—

"मायाशक्त्यभिधः सर्गः सर्वभूतात्मकः प्रभुः।
तस्मात्तस्यात्र विन्यासो नैकदेशे शिवात्मनि"
(२/१० श्लोकस्थ) इति।

तत्रैव "यद्वा विसर्गस्य केवलशक्तित्वात् पञ्चभूतात्मकत्वाभावात्सर्ववर्णोत्पत्तिहेतुत्वाच्च तं त्यक्त्वा तथोक्तिः" (१/१ श्लोकस्थ) इति च।

८। ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् (१/६३) इति शुक्लयजुःप्रातिशाख्यरीत्या "ह्रस्वो दीर्घः प्लुतः सानुनासिको निरनुनासिक उदात्तोऽनुदात्तः स्वरित इति स्वरधर्माः" इत्युव्वटभाष्य (शु. य. प्रा. ३/१३१स्थ) स्वारस्येन च मातृकावर्णमालायां केवलमेकैकस्वरेषु स्थापितेषु दीर्घसमानाक्षरेषु वियोजितेषु च पिङ्गलाभिमता ४५वर्णविशिष्टा वर्णमाला सम्पद्यते। एतन्मतमुद्धृतं पदार्थादर्शव्याख्यायाम्। यथा—

"चत्वारिंशत्तथा पञ्च वर्णसंख्याः प्रकीर्तिताः" (२/११श्लोकस्थ) इति। इयं खलु वर्धितभूतलिपेर्वर्णसंख्या यस्या अयोगवाहेऽनुस्वारे,

डकारस्य संध्वनौ ळकारे, क-ष संयोगात्मके क्षकारे च वियुक्ते माहेश्वरसूत्रघटिका ४२ संख्याका वर्णमाला निष्कृष्यते, याऽत्र सन्दर्भे मुख्यवर्णरूपेण गृहीता।

## १९। उपसंहारः

इत्थं लौकिके वैदिके च संस्कृते व्यवहृतानां सर्वसम्मतानां तदितरेषामयोगवाहानां च वर्णानां भेदोपभेदा निरूपिताः। मुखविवरवर्तिनां तत्तदुच्चारणेन्द्रियाणां व्यापारविशेषाः केन प्रकारेण वर्णानां वैशिष्ट्यापादने निमित्तानि भवन्ति, तदपि प्रदर्शितम्। तत्तद्वर्णोच्चारणेच्छायां प्रवृत्तायां मुखविवरे तत्पूर्वं वा वायोस्तानि तानि गुणकर्माणि समीक्षितानि यैरुच्चारणेन्द्रियाणां तत्तद्वर्णोच्चारणानुकूला स्थितिर्जायते। इदमपि च विवेचितं यद् वायोर्व्यापारा आभ्यन्तरप्रदेशे कस्मात् स्थानादुत्पद्यन्ते, येषां क्रमविकासानुसारं वाचामपि तत्तदाभ्यन्तरकेन्द्रेषु विविधाः क्रमोन्मेषा जायन्ते, येन वक्तुरननुभूतिस्तरमतिक्रम्य विविधानुभूतिस्तरमुत्थिता वर्णाः परिशेषे श्रोतृकर्तृकग्रहणयोग्याः सम्पद्यन्ते। किं तावच्चिरन्तनं परममूलभूतं तत्त्वं यस्मादितरं भूतजातमिव वर्णा अपि प्रादुर्भवन्ति, तत्र सृष्टिक्रमश्च कीदृश इत्यनयोर्विचारार्थं विविधदर्शनानां तन्त्राणां च मतानि सङ्कलितानि, ऊहापोहाश्च विहिताः। श्रवणं च शब्दोत्पत्तिदेशे श्रवणेन्द्रियस्य गमनेन, उत शब्दस्य श्रवणेन्द्रिये प्रवेशेनेति मुख्यमतद्वयस्य शाखोपशाखासहितस्य विमर्शोऽपि निबद्धः। किं तावदनित्या वर्णा उत्पत्तिधर्माण आहोस्विन्नित्यास्ते कादाचित्कीमभिव्यक्तिं भजन्त इति प्रश्नोऽप्युट्टङ्कितः, समाधानं च यथामति सम्पादितम्। संध्वनिध्वनिग्रामात्मकवर्णस्य स्वरूपनिर्धारणमुखेन तदर्थे व्यवहृतेभ्योऽक्षरलिपिशब्दध्वनिभ्यस्तस्य पार्थक्यमपि पर्यालोचितम्। एतदर्थं विविधदर्शन-विज्ञान-व्याकरण-शिक्षा-प्रातिशाख्यगत विचाराणां संयोजनेन समुपबृंह्य समापितोऽयं संस्कृतवर्णसंबद्धः सन्दर्भः।

# परिशिष्टम्

## कठिनशब्दानां भाषाशास्त्रीयार्थाः प्रयोगस्थलानि च

अक्षरम् (syllable)—(१) न क्षरतीत्यक्षरमविनाशि ब्रह्म । वर्णमपि केचिन्नित्यं शब्दब्रह्माचक्षाणा अक्षरमाहुः । 'रक्त' शब्दे र्अक्त्अ इति पञ्चाक्षराणि ।

(२) श्रुतबोधादिषु 'रक्त' इत्यादिष्व क्षरविभागोऽन्यविधः कल्पितः । तदनुसारं 'र' इत्येकमक्षरम्, 'क्त' इति चैकमक्षरम् ।

(३) "न क्षरन्तीत्यक्षराणि । क्षरणमन्याङ्गतया चलनम्" इति वैदिकाभरणव्याख्या (तै. प्रा. १/२ सूत्रस्थ) । रक्तशब्दे 'रक्' इत्येकमक्षरम् । रेफाकारककारा ह्येकत्र निबद्धाः, न त्वेभ्यः कश्चित्तकाराङ्गतया चलति ।

(४) आधुनिकविज्ञानानुसारं रक्तशब्दे ककारोच्चारणे त्रयोऽंशाः—उत्पत्त्यंशः, स्थित्यंशः, स्फोटनांशश्च । ककारोच्चारण आरब्धे यदा जिह्वोच्चारणस्थानं स्पृशति तदोत्पत्त्यंशोऽनुभूयते । यावत्कालं जिह्वोच्चारणस्थाने स्थित्वावायुप्रवाहमवरुणद्धि तावत्कालं स्थित्यंशस्तिष्ठति । स च विरामात्मकः । यदा तु तत्स्थानपरित्यागाद् वर्णः स्फुटति, तदा स्फोटनांशः । इत्थं तेषां मते रेफः ककारस्योत्पत्त्यंशश्चैकमक्षरम् । स्थित्यंशे तूच्चारणं नास्तीति स न कस्यचिदक्षरस्यावयवः, अपि त्वक्षरयोर्विभाजकः । ककारस्य स्फोटनांशस्तकारश्चेत्येकमक्षरम् ।

अक्षरशब्दोऽन्तिममतद्वयानुसारं प्रयोज्यः । वर्णार्थे कैश्चित्प्रयुक्तोऽप्यक्षरशब्दो नैव वस्तुस्थितेः सम्यङ् निदर्शकः । श्रुतबोधादिदिशाऽक्षरशब्दो लिपिगणनासौकर्यमेव सम्पादयति, न तु क्षोदक्षमं वस्तुतत्त्वं निरूपयति । पृ १९, २० ।

अग्रजिह्वा (front of the tongue)—अंशत्रयरूपेण विभक्तस्य जिह्वोपरिभागस्याग्रांशः । (चित्रम्—१) पृ. ६४ ।

अग्रस्वरः (front vowel)—अग्रजिह्वोच्चार्यमाणः स्वरः i, e, ε, a इत्यादिकः (चित्र २ द्र.) पृ. १२८, १३० ।

अघोषः (voiceless)—स्वरतन्त्रीणां कम्पनं विना जायमान उच्चारणध्वनिः । यथा—क, च, ट, त, प, ख, छ, ठ, थ, फ, श, ष, स, विसर्गः । पृ. ८१ ।

अधिजिह्वा (uvula)—मुखनासिकासंयोजकविवरसविधे स्थितं श्वासस्य मुखनासिकाविवरगतिनियामकमुच्चारणेन्द्रियम् । शुण्डिका (चि. १ द्र.) पृ. ८२, ८३, ६६ ।

अनुदात्तः (low pitch)—acute इति ग्रीकृगृहीतस्वरानुरूपः, स्वरतन्त्रीणां मार्गप्रसारं शैथिल्यं ध्वनेर्मृदुतां चापादयन्नुच्चारणस्थानस्याधोभागोच्चार्यः स्वरवर्णः । पृ.६५-६७ ।

अनुनासिकः (nasalised sound)—मुखेन नासिकया च युगपदुच्चार्यमाणो वर्णः । पृ. ८३, ९२, १५७, १६९-१७२, १७५, १७६ ।

अन्तस्थः अन्तस्थाः वा (semi vowel)—half sonant इति ग्रीकृगृहीतस्य semi vocalic इति लाटिनगृहीतस्य च वस्तुनोऽनुरूपः । य र ल व इति ईषत्स्पृष्टप्रयत्नोच्चार्य-

वर्णाः। एषामुच्चारणे जिह्वादिकमुच्चारणस्थानस्य स्पर्शा-स्पर्शयोरन्तर्नाम मध्यवर्तिन्यां स्थितौ तिष्ठतीत्यन्तस्था एते। पृ. १२२, १२३।

अभिव्यक्तिवादः (theory of sound manifestation) वर्णा नित्यास्ते कादाचित्कतयाऽभिव्यज्यन्त इति मतम्। पृ. ४०-४२।

अयोगवाहः (dependent sound)—विविधमतानुसारम् अनुस्वार-विसर्ग-जिह्वामूलीयोपध्मानीय-यम-नासिक्यानुनासिक-रङ्ग-स्वरभक्ति-ॠ-ॡ-(ईषत्स्पृष्ट) इत्यादयो वर्णा ये वर्णान्तराश्रयं विना नोच्चार्यन्ते। एषां विषये भूयान् मतभेदः। पृ. १४५-१४७।

अल्पप्राणः (unaspirated sound)—क च ट त प-ग ज ड द ब-ङ ञ ण न म-य र ल वाः। एषामुच्चारणेऽल्पो वायुर-पेक्ष्यते। आधुनिकविज्ञानमते शषसा अप्यल्पप्राणाः। पृ. ६४, ६५।

आभ्यन्तरप्रयत्नः (intrabuccal effort or effort in the resonance chamber)—काकलकादारभ्यौष्ठान्तं व्याप्ते मुखविवरे वर्णोच्चारणार्थं जिह्वादिना कृतः स्पर्शादिर्यत्नः। स च स्पृष्टेषत्स्पृष्टविवृतेषद्विवृत-संवृतादिभेदवान्। पृ. ६२, ८६, ११९-१२१, १३४-१३६।

उत्पत्तिवादः (theory of sound production)—अनित्या वर्णास्त उत्पद्यन्त इति मतम्। पृ. ४०।

उदात्तः (high pitch)—grave-इति ग्रीकगृहीतस्वरानुरूपः। स्वर-तन्त्रीणां मार्गसंकोचं दृढतां ध्वने रुक्षतां चापादय-न्नुच्चारणस्थानस्योर्ध्वभागोच्चार्यः स्वरः। पृ. ६५-६७।

उपध्मानीयः (voiceless labial stop)—अयं पफयोः पूर्वं केषुचिद्वैदिकसम्प्रदायेषूच्चार्यते । यथा ≍प≍फ इति । शुक्लयजुर्वेदस्य माध्यन्दिनीयशाखायामस्योच्चारणं नास्ति । पृ. १५३, १५४ ।

उरः (chest, lungs) वक्षः, काकलकमित्येके । पृ. ९०, ९४ ।

ऊष्मा उष्मा वा (fricative)—शषसहाः, विसर्गः, केषांचिन्मते वर्ग्यतृतीयचतुर्थवर्णाश्च । एषामुच्चारणे उच्चारणस्थानात् ससंघर्षं वायुप्रवाहस्य निःसरणादूष्मा जायते । पृ. १२२, १२३ ।

कण्ठः (guttur, soft palate, velum)—श्लक्ष्णतालु, अर्थसम्प्रसारणवशात्काकलकं फुप्फुसश्चेत्येके (चि.—१ द्र.) पृ. ९०, ९४ ।

करणम् (articulator or producer of sound) (१) वर्णोच्चारकेन्द्रियम् । जिह्वौष्ठं च । (२) उच्चारणप्रयत्नः, पृ. १०३, १०४, १०६, १०८-११० ।

काकलं काकलकं वा (glottis)—स्वरयन्त्रमुखम् । (चि-१ द्र.) पृ. ९४ ।

कुण्डलिनी (serpant power)—इयं ज्योतीरूपा सार्धत्रिवलयाकारा शक्तिः स्वयंभूलिङ्गमाच्छाद्य स्वपिति । योगिनोऽस्या जागरणं विधाय सहस्रारचक्रे परमात्मनेमां संयोज्य मोक्षं लभन्ते । इयं वर्णसृष्टिहेतुः । पृ. ३३, ३४, ५६ ।

केन्द्रस्वरः (central vowel, middle vowel, indifferent vowel)—जिह्वामध्यादस्योच्चारणं भवति । अस्य लिपेराकारः 'ə' इति (रेखाचित्रम्—२, ३) ।

घोषः (voiced)—अघोषविपरीता वर्णाः। यथा—वर्गाणां तृतीयचतुर्थ-पञ्चमवर्णा ह् य व र लाश्च। केचित् स्वरानपि घोषान् मन्यन्ते। पृ. ८१।

चक्रम् (plexus)—इडापिङ्गलानाड्योः सुषुम्नायां संयोगस्थानम्। षट् चक्राणीति प्रसिद्धिः। तत्र गुदनाभिहृदयकण्ठचक्राणि चतसृणां वाचामभिव्यक्तिकेन्द्राणि। पृ. ४७।

जिह्वामूलीयः (a kind of voiceless glottal stop)—अयं लिप्योच्चारणेन चार्धविसर्गाकृतिः। क-ख-योः पूर्वमयं व्यवह्रियते। यथा ᳵक ᳵख इति। अस्योच्चारणस्थानं जिह्वामूलम्। माध्यन्दिनीयशाखायामस्य व्यवहारो नास्ति। पृ. १५३, १५४।

तालु (hard palate)—कठोरतालु। (चि.—१ द्र.) पृ. ९०, ९४।

ध्वनिः (sound, phone)—वर्णात्मकस्तदितरश्च शब्दः। पृ. २३, २४।

ध्वनिग्रामः (phonogram, phoneme)—वर्णपरिवारः, वर्णकुलम्। पृ. २२।

ध्वनियन्त्रम् (larynx)—स्वरयन्त्रम्। (चि. १ द्र.) पृ. ९४।

नादः (the air producing vibration)—(१) कम्पननिबन्धनो वायुः (२) कम्पनजन्यो वर्णो वा। घोषवर्णः। (३) मध्यमावैखरीभ्यामुत्पद्यमानो ध्वनिः। पृ. ३३-३५, ५०, ५१, ५५, ५६, ८१, ८२।

नासिका (nose)—केषांचिन्मते नासिकाविवराधोऽवस्थितं पणवसदृशं कठोरं चर्म। पृ. ६२, ६३, ९१, ९३, ९४।

नासिक्यः (a kind of the nasal sound)—यजुर्वेदीयः 'हुं' इत्ययोगवाहवर्णः। यथा वह् (हुं) निः। केचित् नासिक्योच्चार्यं वर्णं मन्यन्ते। पृ. १६४, १६५।

परा (the first stage of voice)—मूलाधारस्य गुदचक्रेऽवस्थिता निष्पन्दा सूक्ष्मा नादरहिता सकलशब्दार्थमयी निर्विकल्पकसमाधिगम्या बिन्दुरूपा प्रथमा वाक्। विवक्षायां जातायां प्रथमतोऽत्र वायुसंस्कारो भवति। पृ. ४७-४९, ५२।

पश्चाज्जिह्वा (back of the tongue)—अंशत्रयरूपेण विभक्तस्य जिह्वोपरिभागस्य मूलांशः (चि. १ द्र.) पृ. ९४।

पश्चात्स्वरः (back vowel)—पश्चाज्जिह्वयोच्चार्यमाणः U. o. ɔ. a. इत्यादिकः स्वरवर्णः (चि-२, ३ द्र.) पृ. १२८, १३०।

पश्यन्ती (the second stage of voice)—स्वाधिष्ठानाख्यनाभिचक्र उन्मिषन्ती सविकल्पकसमाधिगम्या नादरहिता द्वितीया वाक्। पृ. ४७, ४९, ५०, ५२।

प्राकृतध्वनिः (articulatory sound)—विवेक्तुमशक्यं क्षणकालं यावदवस्थित औच्चारणिको ध्वनिः। उच्चारणेन्द्रिये चिराचिरस्थितिसम्पादको ध्वनिस्त्वन्यो यस्य नाम वैकृतध्वनिः। पृ. ७९।

प्लुतः (prolonged vowel, or extralong vowel)—त्रिमात्रिकः स्वरवर्णः। यथा—आ ३। पृ. ७०, ७१।

बर्त्स बर्स्व वा (the steep portion in alveola)—दन्तमूलस्योपरिष्टादुच्छूनः प्रदेशः (चि. १ द्र.)।

बाह्यप्रयत्नः (extrabuccal effort)—वर्णोच्चारणार्थं मुखगह्वरे वायु-प्रवेशात्पूर्वं क्रियमाणो विवारादिः प्रयत्नः। पृ. ६२, ८४, ८५, १३४-१३६।

मध्यमा (the third stage of voice)—अनाहताख्यहृदयचक्र उन्मिषितोच्चारयित्राऽनुभूयमाना सनादा वाक्। पृ. ४७, ५०, ५३, ५४।

महाप्राणः (aspirated sound)—अधिकवायुनोच्चार्यमाणो वर्णः। यथा—ख छ ठ थ फ घ झ ढ ध भ श ष स ह विसर्गाः। पृ. ६४, ६५।

मानस्वरः (standard vowel)—अन्ताराष्ट्रियध्वनिविज्ञानपरिषदा निर्द्धारिता आदर्शस्वराः (रे. चि. २ द्र.) पृ. ११६, १२६-१३१।

मूर्धा (cerebrum)—कण्ठतालुमध्ये तन्ततालुमध्ये च सन्निविष्टमुच्चारणेन्द्रियम् (चि. १-द्र.) पृ. ६१, १०४, १०५।

यमः (duplicate incomplete sound)—वर्ग्यपञ्चमवर्णात्परं वर्ग्यपञ्चमवर्णे स्थिते मध्ये जायमानः पूर्ववर्णस्वरूप आनुनासिक्यविशिष्टश्च वर्णः। यथा—अग्(गुं)निरित्यत्र (गुं) इति। केषांचिन्मते कुं खुं गुं घुं इति चत्वारो यमाः। अन्येषां मते चुं छुं जुं झुं इत्यादयश्च, तेन विंशतिर्यमाः। पृ. १६५-१६८।

रङ्गः (a vowel coloured at the end, as it were, with nasalisation)—अन्तानुनासिकस्वरः। यथा—अँ (अ अँ) पृ. १६६-१७६।

वर्णो वर्णं वा (phone, alophone)—ध्वनिग्रामः, संध्वनिः । यथा [अ], /अ/, पृ. १७-२३, २५, २७-४६, १३७-१४० ।

वर्णकुलम् (phoneme)—ध्वनिग्रामः, वर्णपरिवारः, वर्णाकृतिः । यथा /अ/ । पृ. २२ ।

वर्णाकृतिः (वर्णकुलं द्र.) पृ. २२ ।

वाक् (voice)—उच्चार्यमाणः शब्दस्तस्य चत्वारः परादिनामका उन्मेषाश्च । पृ. ४७,४८ ।

वागिन्द्रियम् (articulatory organ)—वाग्यन्त्रस्थमप्रत्यक्षं सूक्ष्ममुच्चारणेन्द्रियम् । पृ. १७, ३५ ।

विन्दुः, बिन्दुर्वा (1) a sound which is purely nasal (2) dot (3) zero (4) atom (5) omniscient (१) अनुस्वारः (२) सूक्ष्मतमं लेखचिह्नम् (३) शून्यम् (४) परमाणुः (५) सर्वज्ञः परमेश्वरः पृ. ३३-३५, ४८, ४६, ५५-५७, १५६ ।

विवारः opening of the larynx)—स्वरयन्त्रमार्गोन्मुक्तिफलको बाह्यप्रयत्नो येनाघोषवर्णा उच्चार्यन्ते । पृ. ८१ ।

विवृतम् (expanding of the mouth cavity, type of effort in producing stop-sounds)—मुख विवरविस्तारक आभ्यन्तरप्रयत्नविशेषः । पृ. १११, ११४, ११६ ।

वृत्तिः (a flow of articulation)—उच्चारणधारा । द्रुतमध्य-विलम्बितभेदेनेयं त्रिविधा । पृ. ७८-८० ।

वैकृतध्वनिः (non-articulatary speech sound)—उच्चारणध्वन्यपरपर्यायस्य प्राकृतध्वनेरुत्पत्त्यनन्तरमुच्चारणेन्द्रिये तस्य

चिराचिरस्थितिसम्पादकः श्रवणेन्द्रिये च चिराचिरग्रहण-सम्पादको ध्वनिः। पृ. २६।

वैखरी (the fourth stage of voice)—श्रवणयोग्याऽन्तिमा वाक्। पृ. ४७, ५१, ५४।

शब्दः (sound, word)—वर्णात्मकस्तदितरो वा ध्वनिः, अर्थबोधको वर्णसमूहः। पृ. २३-२५, २६-३३, ३६-४५।

शब्दब्रह्म (voice as Brahman)—नादरहितं शब्दार्थमयं स्फोटइति व्याकरणदर्शनेऽभिधीयमानं वस्तु। पृ. ३३, ४८, ६०।

श्वासः (breath sound)—श्वासवायुनोच्चार्यमाणा वर्णाः। ते खल्व-घोषवर्णाः। पृ. ८०-८२।

समानाक्षरम् (monophthong, cardinal or simple vowel)—एकैकस्थानेनोच्चार्यमाणाः अ इ उ ऋ लृ इति स्वराः। पृ. १२५।

संध्वनिः (alophone)—एकस्य वर्णकुलस्य व्यक्तिः। यथा—[अ] पृ. २१, २२।

संवारः (contraction of mouth cavity)—स्वरयन्त्रमार्गनिरोध-फलको बाह्यप्रयत्नो येन घोषवर्णा उच्चार्यन्ते। पृ. ८१, १११।

संवृतम् (closing of mouth cavity)—मुखविवरस्य सङ्कोचनम्। पृ. ११४, ११६।

सृक्क सृक्व सृक् वा (inside penaltimate edge of the lip)—ओष्ठान्तर्भागः। (चि. १ द्र.) ६३, ६४।

स्पर्शः (stop, plosive)—जिह्वादिस्पर्शपूर्वकमुच्चार्यमाणः ककारादि-मकारान्तो वर्गः। पृ. १२२।

स्फोटः (absolute potential sound-reality)—(शब्दब्रह्म द्र.) पृ. ३३, ६० ।

स्वरः (vowel, accent)—अकारत आरभ्य औकारपर्यन्ता वर्णाः, अनुस्वारविसर्गावपीति केचित् । उदात्तादिः स्वराघातो बलाघातश्च । पृ. ६६ ।

स्वरभक्तिः (anaptyxis)—व्यञ्जनयोर्मध्येऽसन्नप्युच्चार्यमाणः स्वरांशः । यथा—'बर् (इ) हिषदम्' इत्यत्र र-ह्योर्मध्य इकारांशः । पृ. १७६-१८६ ।

स्वरयन्त्रम् (larynx)—ध्वनियन्त्रम्, गलबिलम् (चि. १ द्र.) पृ. ८०, ६३, ६४ ।

स्वरितः (mixed accent)—circumflex (इत्याख्यग्रीक्स्वरानुरूप उदात्तानुदात्तयोर्मिश्रणजन्यः स्वरः । पृ. ६७ ।

हकारः (an extrabuccal effort causing intermediary stage of breath and voice)—श्वासनादयोर्मध्यमावस्थो बाह्यप्रयत्नः । पृ. ८२ ।

# उद्धृतग्रन्थसूची, उद्धृतोनां निवेशस्थानानि च

## (क) संस्कृत-प्राकृतग्रन्था:

१ अ. प्रा. ★ = अथर्व (वेद)* प्रातिशाख्यम्—शौनकः। द्वितीय-संस्करणम्। सन्—१९६२। चौखम्बासंस्कृतपुस्तकालयः, वाराणसी। पृ. ७६, ८२, ८६, १०४, १०६, १६५, १८२, १८४।

२ अमर(कोषः)—अमरसिंहः। षष्ठसंस्करणम्। सन् १९४४। प्रकाशिका—सत्यभामा बाइ पाण्डुरङ्ग। निर्णयसागरप्रेस्, बम्बई। पृ. १९, २४, ६६।

३ अमोघानन्दिनी शिक्षा—(शिक्षासंग्रह पृ. ९३-१०६स्थ) पृ. १६६।

४ अष्टाध्यायी (सूत्रपाठः)—पाणिनिः। चतुर्थसंस्करणम्। रामलाल कपूर ट्रस्ट। गुरुबाजार, अमृतसर, पञ्जाब। पृ. ६७, ७४, ११४, ११९, १३४, १४८, १५६, १६२, १६८, १७१, १८४।

५ अहिर्बुध्न्यसंहिता। मुद्रकः—जैनवान् मेनन्, सहकारीडाइरेक्टर्, अडैयारलाइब्रेरी अडैयार, मद्रास्। सन् १९१६। पृ. ५०, ५१, ५६, ५७, ७३, १४४, १४८, १५७-१५९।

६ आ. शि. = आपिशलशिक्षा—आपिशलिः (शिक्षासूत्राणि इत्याख्यग्रन्थस्य पृ. १-८ स्थ)। पृ. ६४, ८१, ८४, ८६, ८७, ९८, १३२, १३५, १६४, १६७।

७ आश्वलायनश्रौतसूत्रम्। हरिनारायण आपटे, आनन्दाश्रम प्रेस्, पूना। सन्—१९१७। पृ. ११६, १४०, १५४।

---

★ अनेन प्रकारेण ग्रन्थनामसंक्षेपा अत्र प्रदत्ताः।

* एतत्सूचीस्थपुस्तकनामसु बन्धनीमध्यगता अंशाः क्वचिन्नैव कथ्यन्ते।

८ आह्निककर्मसूत्रावलिः। गङ्गाविष्णु श्रीकृष्ण दास, बम्बई। सन्—१९३८। पृ. १४४।

९ उद्द्योतः—(महाभाष्यसंलग्ना टीका)—नागेशः। पृ. १३५।

१० उ. भा.=उव्वटभाष्यम् (क)—(ऋक्प्रातिशाख्य संलग्नं भाष्यम्)—उव्वटः। ब्रज. बी. दास एण्डको। विद्याविलासप्रेस्, बनारस। १९०३। पृ. ७०, ९१, १२५, १५३, १५६, १६०, १६७।

११ उ. भा.=उव्वटभाष्यं (ख) मातृमोदो वा (शुक्लयजुःप्रातिशाख्य-संलग्नं भाष्यम्)—उव्वटः। पृ. ६८, ७३, ८५, ११३, १४५, १६६, १६७, १७६, १८२, १८३, १९१।

१२ ऋक्तन्त्रम्—(सामप्रातिशाख्यम्)—शाकटायनः। सम्पादकः—सूर्यकान्तः। प्रकाशकः—मेहेरचान्दलक्ष्मणदासः। कुचाचलन्, दरियागञ्ज, दिल्ली—६। सन्—१९७०। पृ. ६८, ७१, ८६, ९७।

१३ ऋक्तन्त्रविवृतिः। (ऋक्तन्त्रस्यान्ते सन्निवेशिता) पृ. ६६।

१४ (ऋ. प्रा.)—ऋक्(वेद) प्रातिशाख्यम्—शौनकः। संस्कृतसाहित्य-परिषद्, श्यामाबजार्, कलिकाता। पृ. ६०, ६४, ७६, ८०, ८२, ८५, ९५, ११६, १२२, १२५, १२७, १४१, १४२, १५२, १५४, १५६, १६३, १६५, १६६, १७१, १७७, १७८, १८०, १८२, १८४, १८७।

१५ ऋक्संहिता, तृतीयभागः। तिलकमहाराष्ट्र यूनिवर्सिटी, वैदिक-संशोधनमण्डलम्, पूना। सन्—१९४१। पृ. २७।

१६ ऐतरेयारण्यकम्। हरिनारायण आपटे, पूना। सन् १८९८, पृ. ६०, १५०।

१७ कणादसूत्रविवृतिः—जयनारायणतर्कपञ्चाननः। (वैशेषिकदर्शन-स्यान्ते सन्निवेशिता) प्रकाशिका—एसिआटिक् सोसाइटी अब् बेङ्गाल्। सन्—१८६१। पृ. ३६, ३७।

१८ कामकलाविलासतन्त्रम्—पूर्णानन्दः। गवेषणाविभागः, श्रीनगरम्, काश्मीरः। पृ. ४८, ४६, ५७।

१६ केशवरामकृतपद्यात्मिका शिक्षा—(शिक्षासंग्रह पृ. १५०-१५२स्थ) पृ. १५४, १५५।

२० केशवी शिक्षा—केशवरामः। (शिक्षासंग्रह पृ. १३८-१४६स्थ) पृ. १८१।

२१ (गौतमीय) न्यायसूत्रम्—गौतमः। मनिकल् इच्छाराम देसाई। गुजराटी प्रिंटिङ्ग् वर्क्स्, बम्बई। पृ. २६।

२२ चान्द्रवर्णसूत्राणि—चन्द्रगोमी। (शिक्षासूत्राणि। पृ. २४-२६स्थ) पृ. ११४, १२३, १५३।

२३ छन्दोभाषा पदक्रमसदन वा—माहिषेयः। (तैत्तिरीयप्रातिशाख्येन संलग्नं भाष्यम्) मद्रास् यूनिवर्सिटी। सन्—१६३०। पृ. ७४, ८२, १०४, १०६, १७६।

२४ जगदीशचन्द्रटिप्पणी—जगदीशचन्द्र चट्टोपाध्यायः। शिवसूत्र-विमर्शिनीसंलग्ना। पृ. १४८, १५०।

२५ तन्त्रसारः—अभिनवगुप्तः। सम्पादकः—मुकुन्दरामशास्त्री। निर्णयसागर प्रेस्, बम्बई, सन्—१६१८। पृ. १४०।

२६ तर्कसंग्रहः—अन्नम्भट्टः। नन्दकिशोर एण्ड् ब्रदर्स्, बनारस। सन्—१६३०। पृ. ४४।

२७ तात्पर्यटीका—वाचस्पतिमिश्रः। प्रकाशकः—जयकृष्णदास हरिदासगुप्तः। चौखम्बा संस्कृत सीरिज् अफिस्, बनारस सिटी। सन्—१६२५। पृ. ३०।

२८ तै. प्रा.=तैत्तिरीयप्रातिशाख्यम्। एसिआटिक् सोसाइटी अव् बेङ्गाल्। सन्—१८७२। पृ. १६, ३०, ५३, ५४, ६६, ६७, ७०,

७३, ७४, ८२, ८५, ६६, १०२, १०६, १०६, ११६, १५१, १५७, १६४, १६५, १६७, १८०, १८५।

२६ त्रिभाष्यरत्नम्। (तैत्तिरीयप्रातिशाख्यस्य व्याख्या) सम्पादकः—राजेन्द्रलाल मित्रः, प्रकाशिका—एसियाटिक् सोसाइटी अव् बेङ्गाल्, कलिकाता, सन्—१८७२, (तैत्तिरीयप्रातिशाख्य-संलग्नम्)—पृ. ३०, १०६, १५५, १६४, १६६, १७६, १८०, १८६, १८६, १६०।

३० ध्रुवपदा—(तर्कसंग्रहस्य व्याख्या)—हरिहरशास्त्री। (तर्कसंग्रह-संलग्ना)। पृ. ३८।

३१ ध्वन्यालोकः—आनन्दवर्द्धनाचार्यः। जयकृष्ण दास हरिदास-गुप्तः। चौखम्वासंस्कृतसीरिज् अफिस्, बनारस्, विक्रम संवन्—१९९७। पृ. २४।

३२ नारदीशिक्षा—नारदः। (शिक्षा संग्रहस्य पृ. ३६४-४४६ स्थ) पृ. ६६, १६६, १८०, १८३।

३३ नैषधीयचरितम्—श्रीहर्षः। नवमसंस्करणम्। सन् १६५२। निर्णयसागर प्रेस्, बम्बई। पृ. ७५।

३४ न्यायकुसुमाञ्जलिः—उदयनाचार्यः। द्वितीयसंस्करणम, १६५७। चौखम्वासंस्कृतसीरिज् अफिस्, बनारस। पृ. २७।

३५ न्यायमञ्जरी—जयन्तभट्टः। सम्पादकः—एम. एम्. गङ्गाधर-शास्त्री तैलङ्गः। प्रकाशकः—इ. ये. लाजरस् एण्ड् को, बनारस। १८६५। पृ. ३८।

३६ न्यायवार्त्तिकम्—श्रीभारद्वाजोद्द्योतकरः। चौखम्बा संस्कृत सीरिज्। प्रकाशकः—श्री जयकृष्णदासगुप्तः। बनारस, १६२०। पृ. १७, ३१, ३६।

३७ पञ्जिका—(पाणिनीशिक्षासंलग्नं भाष्यम्]। पृ. १८७।

३८ पदार्थादर्शः—राघवभट्टः। (सारदातिलकसंलग्नः) पृ. ४६, १६१।

३९ (प. व्याख्या) पशुपतिव्याख्या—पशुपतिशास्त्री। (ऋ. प्रा. संलग्ना व्याख्या) पृ. ६४, ७३, १२३, १६२।

४० पाणिनीयशिक्षा—पाणिनिः पिङ्गलो वा। सम्पादकः—मनमोहन घोषः। कलिकाता यूनिवर्सिटी। सन्-१९३८। पृ. ५४, ५८, ७१, ७३, ८२, ८६, ९१, ९७, १०१, १०२, ११३, १५१, १५४, १६१, १७३, १८८, १८९।

४१ पाराशरीशिक्षा—पराशरः (शिक्षासंग्रह पृ. ५२-७१ स्थ) पृ. ११७, १६७, १७१।

४२ प्रातिज्ञापरिशिष्टसूत्रम्—कात्यायनः। (शुक्लयजुःप्रातिशाख्यान्ते-सन्निवेशितम्)। पृ. ११८, १५५, १८१।

४३ प्रतिज्ञापरिशिष्टसूत्रस्य भाष्यम्—अनन्तदेवयाज्ञिकः (प्रतिज्ञा-परिशिष्टसूत्रान्ते सन्निवेशितम्)। पृ. ११७।

४४ प्रदीपः—कैयटः। (महाभाष्यसंलग्ना व्याख्या) पृ. ७०, ७१, ७८, ७९, ८२, ९२।

४५ प्रपञ्चसारतन्त्रम्—शङ्कराचार्यः। सम्पादकः—आर्थर्, एवेलन। प्रकाशिका—आगमानुसन्धानसमितिः, कलिकाता। सन् १९३५। पृ. ३४, ३५, ४७, ५२, १२०, १४८, १९०, १९१।

४६ प्रमेयकमलमार्तण्डः—प्रभाचन्द्रः। प्रकाशिका — सत्यभामाबाइ पाण्डुरङ्ग, निर्णयसागर प्रेस, बम्बई। द्वितीय संस्करणम् १९४१। पृ. ३०।

४७ प्रशस्तपादभाष्यम् (वैशेषिकदर्शनभाष्यम्) — प्रस्शपादः। सम्पादकः—वी. पी. द्विवेदी। प्रकाशकः—ब्रजभूषणदास एण्डको, १९१९। पृ. १७, २७।

४८ प्राकृतप्रकाशः—वररुचिः। सम्पादकः—पी. एल. वैद्यः। पूना। दि ओरिएण्टल् बुक् एजेन्सी। सन्-१९३१। पृ. १८, ११७, १५६।

४९ प्रातिशाख्यकीर्त्तिप्रकाशः—युगलकिशोरव्यासपाठकः (शुक्लयजुः-प्रातिशाख्यसंलग्नः) पृ. ७५, १७०, १७५।

५० प्रातिशाख्यप्रदीपशिक्षा— बालकृष्ण गोडशे, (शिक्षासंग्रह: पृ. २१०-३६६ स्थ) पृ. १६५, १८४)

५१ ब्रह्मसूत्रम्—वेदव्यास: । ब्रह्मसूत्रशाङ्करभाष्यसंलग्नम् प्रकाशक:—पाण्डुरङ्ग जावजी, निर्णयसागर प्रेस, बम्बई, १९३८ । पृ. ३१ ।

५२ भागवतचन्द्रचन्द्रिका—वीरराघवाचार्य: ( श्रीमद्भागवत संलग्ना टीका) पृ. ४३ ।

५३ भावप्रदीप:—सूर्यनारायणशुक्ल: ( वाक्यपदीयेन संलग्ना टीका ) । पृ. २३, ३१, ४५, ५१-५३ ।

५४ मध्यसिद्धान्तकौमुदी—वरदराजाचार्य: । द्वितीयसंस्करणम् । सन् १९६० । प्रकाशक:—चौखम्बा संस्कृत सीरिज् अफिस, वाराणसी-१ । पृ. ६४ ।

५५ मल्लशर्मकृता शिक्षा—(शिक्षासंग्रह पृ. १५३-१६० स्थ) पृ. १७३ ।

५६ महाभारतम्—बादरायण: । संस्कृत पुस्तक भाण्डार, ३८ विधान सरणी, कलिकाता-६ । पृ. ५२ ।

५७ माण्डूकी शिक्षा—( शिक्षासंग्रह पृ. ४६३ ४७८स्थ ) पृ. ११३, १८१ ।

५८ मीमांसादर्शनम्—जैमिनि: । प्रकाशक:—महादेव चिमणजी आपटे, पूना । चतुर्थसंस्करणम् । ग्रन्थाङ्क:—९७ । पृ. २९, ३२ ।

५९ मुकुन्दरामटिप्पणी—मुकुन्दराम शास्त्री । ( तन्त्रसारसंलग्ना ) पृ. १४९ ।

६० या. शि. = याज्ञवल्क्य शिक्षा—याज्ञवल्क्य: । (शिक्षासंग्रह पृ. १ ३५ स्थ) पृ. ७०, ७१, ७५, ८६, ८७, ९८, ११८, १२२, १३२, १४७, १४८, १५५, १५६, १६६, १७०, १७३, १७४, १७५ ।

६१ रघुवंशम् —कालिदास: । दशमसंस्करणम् । सन्—१९३२ । पाण्डुरङ्ग जावजी, निर्णयसागर प्रेस, बम्बई । पृ. ४९ ।

६२ लघुमाध्यन्दिनीय शिक्षा—( शिक्षासंग्रह पृ. १०४-११६स्थ ) पृ. १५२ ।

६३ लघुशब्देन्दुशेखरः—नागेश भट्टः । चतुर्थसंस्करणम् । सन्-१९५४ । चौखम्बा संस्कृत सीरिज्, बनारस । पृ. ६१, ६२, ६९, ८४, ८७, १०३, १२२, ।

६४ वर्णरत्नप्रदीपिका शिक्षा—अमरेशः (शिक्षासंग्रह पृ. ११७-१३७स्थ) पृ. ११३, ११८, १४६ ।

६५ लोमशी शिक्षा—लोमशः । ( शिक्षासंग्रह पृ. ४५६-४६२स्थ) ७५, पृ. १७३, १७४, १८१ ।

६६ वर्णबीजप्रकाशः—सरयू प्रसाद शर्मा । संवत् १६६८ । खेमराज श्रीकृष्ण दासः, खेतवाड़ो वेङ्कटेश्वरष्टिम् प्रेस, बम्बई । पृ. १४३ १४४ ।

६७ वाक्यपदीयम्—भर्तृहरिः, सम्पादकः-रामगोविन्द शुक्लः, चौखम्बा संस्कृत संस्थान, वाराणसी । पृ. २३, ३५, ४३, ५२, ६०, ६१ ।

६८ वात्स्यायनभाष्यम्—वात्स्यायनः । (न्यायदर्शनसंलग्नम्) चौखम्बा संस्कृत सीरिज् अफिस् । प्रकाशकः—श्री जयकृष्ण दासगुप्तः, बनारस. १६२० । पृ. ३० ।

६६ वेदान्तपरिभाषा—धर्मध्वजाध्वरिः । सम्पादकः--एस्. सूर्यनारायण शास्त्री । आड्यार पुस्तकालयः । आड्यार १९४२ । पृ. ४० ।

७० ( वैयाकरण ) सिद्धान्तकौमुदी—भट्टोजीदीक्षितः । खेमराजजी श्रीकृष्णदासः । वेङ्कटेश्वरष्टिम प्रेस, बम्बई । सन् १६५२ । पृ. २१, २२, ६४, ६६, ७४, ८१, ८४, ८७, ६६, १०६, ११३, १२२, १३३, १५२, १५४, १६० ।

७१ ( वैयाकरण ) सिद्धान्तचन्द्रिका सारस्वतव्याकरणं वा तृतीय-संस्करणम् । सन् १९५६ । चौखम्बा संस्कृत सीरिज्, बनारस । पृ. १२५ ।

७२ ( वैयाकरण सिद्धान्त ) मञ्जूषा—नागेश भट्टः । सम्पादकः — गिरिजाप्रसाद शर्मा पाण्डेयः । चौखम्बा संस्कृत पुस्तकालयः, बनारस । पृ. ४८, १५८ ।

७३ (वैयाकरण) परमलघुमञ्जूषा - नागेश भट्टः । जयकृष्णदासहरि-दास गुप्तः । चौखम्बा संस्कृत सीरिज् अफिस्, बनारस सिटी । सन १९३५ । पृ. ४८-५१ ।

७४ वैशेषिकदर्शनम्—कणादः । प्रकाशिका एसिआटिक् सोसाइटी अब् बेङ्गाल् । १८६१ । पृ. ३० ।

७५ ( व्याकरण ) महाभाष्यम् ( पातञ्जल ) महाभाष्यं वा—पातञ्जलिः जयकृष्णदासहरिदास गुप्तः । चौखम्बा संस्कृत सीरिज् अफिस्, बनारस । सन् १९५४ । पृ. १६, २२, २४, २५, ३१, ३३, ४२, ४४, ४५, ६१, ६७, ६८, ६६, ७०, ७६, ८०, ८३, ६१, ६२, १०१, १३०, १४०, १४५, १५६ ।

७६ शब्दकौस्तुभः— भट्टोजी दीक्षितः सम्पादकः – गोपाल शास्त्री नेने । प्रकाशकः जयकृष्णदासहरिदास गुप्तः । चौखम्बा संस्कृत सीरिज् अफिस्, बनारस सिटी । १९३३ । पृ. ६३, ८३, १४२, १६८, १८६ ।

७७ शाकटायनप्रक्रियासंग्रहः—शाकटायनस्यमुनिः । ज्यष्ठरामसुकुन्दजी शर्मा पन्नालालजैनश्च । केल्हापुर जैनेन्द्र प्रेस् । सन्-१९०७ । पृ. ६८, ६६, १०६, ११४, १६४ ।

७८ शाङ्करभाष्यम् — शङ्कराचार्यः । ( ब्रह्मसूत्रशाङ्करभाष्यसंलग्नम् ) पृ. २६, ३१ ।

७९ शाबरभाष्यम् (मीमांसादर्शनसंलग्नम्)--शबरस्वामी । प्रकाशकः— महादेवचिमणजी आपटे, पूना । चतुर्थसंस्करणम् । पृ. २८, ३०, ४२ ।

८० शिक्षाप्रकाशः — ( शिक्षासंग्रह पृ.३८५-३९३स्थ ) पृ. १४७, १६७, १७१, १८६ ।

८१ शिक्षावल्ली ( याज्ञवल्क्यशिक्षासंलग्ना विवृतिः ) अमरनाथ-शास्त्री दीक्षितः । प्रकाशकः—दीक्षितकृष्णचन्द्रशर्मा । पशुपतीश्वरः, काशी । विक्रम संवत्— २०१६ । पृ १४७, १५५, १७०, १७४, १७६, १७७ ।

८२ शिक्षासंग्रहः । (उद्धृतबहुशिक्षाणां संग्रहः) । सम्पादकः—युगल-किशोरव्यासः । प्रकाशकः—व्रज बी. दास एण्ड् को, बनारस प्रिंटिङ्ग प्रेस् । सन् १८९३ ।

८३ शिक्षासूत्राणि—(अस्माभ्चान्द्रवर्णसूत्रापिशलशिक्षे उद्धृते) सम्पादकः—युधिष्ठिर-मीमांसकः । प्रकाशकः—भारतीयप्राच्यविद्या-प्रतिष्ठानम् । ३२/१३८१ अलवरगेट्, अजमेर । संवत् २०२४ ।

८४ शिवसूत्रविमर्शिनी—क्षेमराजः । सम्पादकः — जगदीशचन्द्र-चट्टोपाध्यायः । प्रकाशकः — अर्कियोलोजिकाल् एण्ड् रिसार्च डिपार्टनेण्ट् । श्रीनगरम्, काश्मीरः, सन् १९११ । पृ. ३४, ५६, १४५ ।

८५ शु. य. प्रा. — शुक्लयजुःप्रातिशाख्यं वाजसनेयिप्रातिशाख्यं वा कात्यायनः । सम्पादिका —बनारस— संस्कृतमहाविद्यालयस्य पण्डितमण्डली । प्रकाशकः—व्रज बी. दास एण्ड् को । सन्—१८८८ । पृ. १८, ३०, ७१, ७२, ७५, ८५, ९५, ९९, १०२, १०६, ११५, ११८, १३३, १५२, १५४, १५५, १६४, १६६, १७८, १९१ ।

८६ श्रीमद्भागवतम् —वेदव्यासः। मुद्रकः — नित्यस्वरूपब्रह्मचारी। देवकीनन्दन प्रेस्, वृन्दावनम्। संवत्-१९६१। पृ. २५, १८४।

८७ श्रीधरीटीका — श्रीधरस्वामी — (श्रीमद्भागवतसंलग्नटीका) संस्कृत पुस्तक भाण्डार ३८, विधान सरणी, कलिकाता। पृ. १८८।

८८ श्रुतबोधः—कालिदासः। श्रीहरिकृष्णनिबन्धभवनम्, बनारस-सिटी। पृ. १६, १५३, १५६।

८९ सारदातिलकं शारदातिलकं वा—लक्ष्मणाचार्यः। श्रीकृष्णानन्द-दास हरिदासगुप्तः। चौखम्बा संस्कृत सीरिज् अफिस्, बनारस। सन्-१९३४। पृ. २४, ३३, ३४. ५५, ५६, ८८, १०६।

९० साहित्यदर्पणः—विश्वनाथकविराजः। मोतीलाल बनारसीदासः, बनारस, दिल्ली, पटना। सन्-१९५६। पृ. १४४।

९१ सांख्यकारिका—ईश्वरकृष्णः। सम्पादकः — विष्णुप्रसाद शर्मा, १९७०। चौखम्बा संस्कृत सीरिज् आफिस्, बाराणसी-१ पृ. ३१।

## (ख) हिन्दीग्रन्थाः

९२ ध्वनिविज्ञान —जी. बी. धलः। प्रेमबुक् डिपो, हसपिटाल रोड्, आग्रा। पृ. ९९।

९३ भारतीयदर्शन – बलदेव उपाध्यायः। द्वितीयसंस्करणम् १९४५। चौखम्बा संस्कृत पुस्तकालयः, पोस्ट बाक्स् ८, बनारस। पृ. ३१।

९४ भाषाविज्ञान — भोलानाथ तिवारी। षष्ठसंस्करणम्, १९६७। किताब महल, इलाहबाद। पृ. १६, ११६।

९५ सामान्य भाषाविज्ञान — बाबूराम सक्सेना। हिन्दी साहित्य सम्मेलन, प्रयाग। शकाब्द १८८३। पृ. १३४।

## (ग) ओडियाग्रन्थाः

९६ इंराजी उच्चारणशिक्षा—गोलकविहारी धलः। प्रथम मुद्रणम्, १९६३। दासब्रदर्स, ब्रह्मपुर, कटक, सम्बलपुर। पृ. १३४।

९७ प्रवेशिका। मौलिक ब्याकरण रचना ओ प्रवन्ध — नारायण महापात्रप्रभृतयः। पुनर्मुद्रणम्—१९६८। मुद्राकरः — अभिराम महापात्रः, ग्रन्थमन्दिरम्, कटक-२।

## (घ) इङ्गलिश्ग्रन्थाः

९८ Acoustics — T. M. Yarwood, Macmillan & Co. Limited, S. T. Martins Street, London, 1953.
पृ. ३

९९ An Outline of English Phonetics — Daniel Jones, 9th edition, Heffer, Cambridge.
पृ. २०, २२, ७४, १२४

१०० Critical Studies in the Phonetic Observations (of Indian Grammarians)—Siddheswar Varma. First Indian edition, 1961. Royal Asiatic Society, London, Munshiram Manoharlal, Oriental book sellers & publishers. Nai Sarak, Delhi-6. पृ. ६६, ७२, ९०, १४१, १४६, १४७, १५९, १६०, १६२, १७२, १८८

१०१ Elements of Science of Language—S. Taraporewala, Second Edition, Calcutta.
पृ. ११४, ११५, १२४, १२९

१०२ General Phonetics—R. M. S. Heffner, 1949, Madison. The University of Wisconsin Press.
पृ. २०, २१, १८५

१०३ Growth And Structure of the English Language —Otto Jesperson, 9th edition, Indian branch, Oxford University Press. पृ. २६, ७४, ७५, १६२

१०४ Language, Its nature, Development And Origin —Otto Jesperson, Reprint 1947, London, George Allen and Unwin Ltd. Ruskin House, 40. Museum Street, W. C. I. पृ. २६

१०५ Outline of Linguistic Analysis—Bernard Bloch & George L. Trager, 1942, Linguistic Society of America. पृ. २१, २२

१०६ Phonemics—Kenneth, L. Pike. Second printing 1949, University of Michigan publications, Linguistics volume iii. पृ. २१, २२

१०७ Phonetics in Ancient India—W. S. Allen. 1953. Groffrey, Cambridge, publisher to the Oxford University, London, Newyork, Toronto.
पृ. ५८, ६०, ६१, १०७, ११४, १२४, १५०, १८३

१०८ Translation and Notes on Atharva Veda Pratisakhya—William D. Whitney, (attached to Atharva Pratishakhyam) पृ. १०७

# सहायकग्रन्थसूची

( उद्धृतग्रन्थसूचीप्रदत्ताः सर्वेऽपि ग्रन्थाः सहायकाः । अत्र केवलं तदितर एव प्रदीयन्ते । )

## संस्कृत हिन्दी ग्रन्थाः


१ अद्वैतदीपिका नृसिंहाश्रमः । प्रकाशकः—एच्. एन्. बागची । सम्पादक —गोपाल् शास्त्री नेने । बनारस ।

२ अद्वैतसिद्धिः— मधुसूदन सरस्वती । सम्पादकः— राजेन्द्रप्रसाद घोषः । प्रकाशकः — क्षेत्रपाल घोषः । ६नं. पार्शिबागान लेन, कलिकाता ।

३ अष्टावक्रसंहिता— अष्टावक्रः । सम्पादकः प्रकाशकश्च — ईश्वरचन्द्र-विद्यासागरः । रमानाथ मजुमदार ष्ट्रीट्, कलिकाता ।

४ कल्पतरुपरिमलः—अप्पय्यदीक्षितः । (ब्रह्मसूत्रशाङ्करभाष्यसंलग्नः) ।

५ खण्डनखण्डखाद्यम् —श्रीहर्षः । सम्पादकः — डा० नविकान्त झा । चौखम्बा संस्कृत सीरिज् अफिस्, बाराणसी-१ ।

६ तत्त्वप्रदीपिका— चित्सुखाचार्यः । चौखम्बा संस्कृत सीरिज् अफिस् बाराणसी-१

७ तत्त्ववैशारदी···( पातञ्जलयोगदर्शनव्याख्या ) — वाचस्पतिमिश्रः, (पातञ्जलयोगदर्शनसंलग्ना) ।

८ तन्त्रवार्त्तिकम्—कुमारिलभट्टः । चौखम्बा संस्कृत सीरिज् अफिस्, बाराणसी-१

९ तुलनात्मक भाषाशास्त्र— मङ्गलदेव शास्त्री । इण्डिअन् प्रेस प्रा. लि. । इलाहाबाद ।

१० पञ्चपादिकाविवरणम् — पद्मपादाचार्यः। चौखम्बा संस्कृत सीरिज् अफिस्, बनारस-१
११ (पातञ्जल) योगदर्शनम् — पतञ्जलिः। सम्पादकः — नारायण मिश्रः। प्रकाशकः—भारतीय विद्याप्रकाशनम्। पोस्ट बाक्स-१०८ कचौडी गली, बाराणसी। प्रथम संस्करणम्-१९७१।
१२ प्रमेयरत्नमाला—अनन्तवीर्यः। चौखम्बा संस्कृत सीरिज् अफिस्, पोस्ट बाक्स् ८, बाराणसी-१।
१३ बृहती—प्रभाकर मिश्रः। चौखम्बा संस्कृत सीरिज् अफिस्, बनारस-१।
१४ भामती—वाचस्पति मिश्रः। (ब्रह्मसूत्रशाङ्करभाष्यसंलग्ना।
१५ मातृकाभेदतन्त्रम्। संस्कृत पुस्तक भाण्डार। ३८, बिधान सरणी, कलिकाता-६।
१६ मानमेयोदयः— नारायणः। सम्पादकः—कुन्हनराजा। थियोसाफिकल पब्लिशिङ्ग हाउस्, अड्यार, मद्रास।
१७ मीमांसान्यायप्रकाशः—आपदेवः। सम्पादकः—नारायण शास्त्री। प्रकाशकः— चौखम्बा संस्कृत सीरिज् अफिस्, बनारस इत्याख्यस्य सम्पादकः।
१८ युक्तिदीपिका (सांख्यकारिका विवृतिः)—सम्पादकः — रामचन्द्र पाण्डेयः। मोतीलाल बनारसी दासः। बनारसः।
१९ वेदान्तकल्पतरुः — अमलानन्द सरस्वती। (ब्रह्मसूत्रशाङ्करभाष्यसंलग्नः)।
२० व्यासभाष्यम्—व्यासः। (पातञ्जलयोगदर्शनसंलग्नं भाष्यम्)।
२१ शिवसंहिता—रामचरण पुरी। प्रकाशकः— गङ्गाविष्णु श्रीकृष्णदासः। कल्याण बम्बई। संवत् १९८८।
२२ षट्चक्रनिरूपणम् —पूर्णानन्दयतिः। सम्पादकः—आर्थर् एवलन्। गणेश एण्ड् को, मद्रास, १९२४।

२३ षोडशश्लोकी शिक्षा (शिक्षासंग्रहस्य पृ. १६४-२६५ स्थ)।

२४ संस्कृतका भाषाशास्त्रीय अध्ययन—भोलाशङ्कर व्यासः। प्रथम-संस्करणम्। १९५७। भारतीय ज्ञानपीठ, काशी।

२५ सांख्यतत्त्वकौमुदी—वाचस्पतिमिश्रः। (सांख्यकारिकासंलग्ना)।

२६ सांख्यप्रवचनभाष्यम्— विज्ञानभिक्षुः। (सांख्यसूत्रेण संलग्नम्) सम्पादकः—वेङ्कटेशलेले शास्त्री। प्रकाशकः—मनिलाल इच्छाराम देसाई। बम्बई, १९२९।

२७ सांख्यसूत्रम्—कपिलः। सम्पादकः — रामशङ्कर भट्टाचार्यः। भारतीयविद्याप्रकाशनम्। कचौडी गली, वाराणसी। संवत् २०२२।

## इङ्ग्लिशग्रन्थाः

२८ Introduction to Comparative Philology—P. D. Gune, Edited by N. P. Gune, Oriental Book House, Poona.

२९ A Practical Grammar of the Sanskrit Language —Monier Williams, Chowkhamba Sanskrit Series Office, Benaras.

३० A Text Book of Sound—Kharg & Bedi, Atmaram & Sons, New Delhi.

३१ A Text Book of Sound—R. L. Sighal & D. R. Sharma, S. Chand & Co. New Delhi.

३२ A Text Book of Sound—R. N. Ghosh & R. N Rai, Indian Press Ltd. Allahabad, 1949.

३३ General Psychology—G. D. Boaz, Publisher, Boaz Institute of Psychological Service, Madras, 1976.

३४ Introduction to Psychology—Hilgard Atkinson & Atkinson, Oxford I. B. H. Publishing Company, 6th edition 1975.

३५ Language—Leonard Bloomfield, New York, Holt, Rinehert & Winston, 1933.

३६ Linguistic Introduction to Sanskrit—Balakrishna Ghosh, Sanskrit Pustak Bhandar, 38, Bidhan Sarani, Calcutta-6.

३७ Mannal of the Sanskrit Phonetics—C. C. Uhlenback, Munshiram Manoharlal, Post Box 1165, New Sarak, Delhi-6.

३८ Sound—K. Bhattacharya, Hindustan Publishing Concern, Calcutta-6.

३९ The Sanskrit Language—T. Burrow, Faber & Faber, London. International book service, Deccan Gymkhana, Poona-4.

४० The Serpent Power—Arthor Avelon, Sanskrit Pustak Bhandar, 38, Bidhan Sarani, Calcutta-6.